**[1]तदेवमैकाधिकरण्यं स्फुटं विपर्ययसाधनम्[2]। विशेषाभिधानोन्नयनमेवेत्थमिति चेत्–न, तस्याः प्रत्ययार्थत्वेनाभ्युपगमात् । प्रत्ययस्य चैकत्वे वाचकभेदादृते वाच्यनानात्वायोगात् । धातवस्तु नानात्मानः करोतिसामानाधिकरण्यतया तदर्थ[3]विशेषाभिधायिन इति साम्प्रतम् ।**

---

न केवलं सामानाधिकरण्याख्यस्य हेतोः दृष्टान्ताभावात्सिषाधयिषितार्थासाधकत्वमेव, किन्तु विपरीतसाधकत्वमपि प्राप्नोति, वृक्षशिंशपादिदृष्टान्तेषु अर्थभेदस्य दृष्टत्वादित्याह—तदेवमिति । अथ तद्दोषपरिजिहीर्षया करोतिसामानाधिकरण्यात्पचत्यादीनां तदर्थविशेषाभिधानमनुमीयत इति शङ्कते–विशेषाभिधानमि(धाने)ति। एतन्निराकरोति–नेति । निराकरणहेतुमाह—तस्या इति । तस्या भावनायाः प्रत्ययार्थत्वमभ्युपगम्यते भावनावादिना । तच्चैवं सति न सिध्यति, प्रत्ययस्यैकत्वे वाच्यनानात्वानुपपत्तेः । नहि वाचकभेदादृते वाच्यनानात्वं संभवति । करोत्यर्थविशेषाश्च नानात्मानः । तस्मान्न तेष्वेकः प्रत्ययो वर्तितुमर्हति । नन्वेवं सति करोतिसामानाधिकरण्यं पचत्यादीनां निर्निबन्धनमेव स्यादित्याशङ्क्याह–धातव इति । पचियज्यादयो धातवो नानात्मानः करोत्यर्थविशेषान्नानात्मनोऽभिधातुं प्रभवन्तीति सामानाधिकरण्योपपत्तिः, धातूनामेव च करोत्यर्थविशेषाभिधानानुमाने सिद्धसाध्यता ; करोत्यर्थस्य धात्वर्थसामान्यमात्रस्याभ्युपगमादिति ।

---

१. तदिदमैका—**क, ख, ग, घ, ङ.**

२. साधनः—**ख**

३. तदर्थभेदाभि—**क, ग, घ, ङ.**

**अपि च—**

**भावाभावे प्रयोगस्य द्विधापि खलु दर्शनात् ।**
**धात्वर्थवर्तिसामान्यं करोत्यर्थमुपागमत् ॥ ३ ॥**

**किं करोति घण्टा ? ध्वनतीति न ध्वनिजन्यमन्यत् । सदपि वा**

---

इदानीं करोतेरपि भावनावचनत्वासंभवाच्चैतन्नोपपद्यत इत्याह—अपि च, भावाभावे प्रयोगस्य द्विधापि खलु दर्शनात् । धात्वर्थवर्तिसामान्यं करोत्यर्थमुपागमत् ॥

यो हि शब्दो यस्यार्थस्याभावेऽपि प्रयुज्यते न स तदर्थो भवितुमर्हति । प्रयुज्यते च करोतिर्भावनाया[१] अभावे द्विधापि—भाव्याभावेन भावनाभिधायिशब्दाभावेन च । अतो न करोतेर्भावनार्थत्वं युक्तम् । कस्तर्हि करोतेरर्थः? धात्वर्थवर्तिसामान्यम् । तद्भावे प्रयोगात् तदभावे चाप्रयोगात् । ततश्च धात्वर्थसामान्यविशेषातिरेकी भावनापदार्थः करोत्यभिधेयः पचत्याद्यभिधेयो वा न सिध्यतीति श्लोकस्य तात्पर्यार्थः । नात्रार्तावाक्षरवैषम्यमस्ति । एतदेव विवृणोति—किं करोतीत्यादिना । यदा हि कश्चिदेवं पृच्छति 'किं करोति घण्टा' इति ? तदा [२]अन्यः प्रतिवक्ति—'ध्वनति' इति । तत्र भवनाया अभावे करोतेः प्रयोगो दृष्टः । ननु तत्रापि भावना विद्यत एवेत्याशङ्क्याह—न ध्वनिजन्यमिति । यदि तत्र ध्वनिना अन्यज्जन्यं स्यात् तदा भवेदपि भावना । न च तदस्ति । ननु तत्र सुखं दुःखं ज्ञानं वा अन्यज्जन्यमस्त्येवेत्याशङ्क्याह—सदपि वेति । सदपि वा जन्यं [३] नास्मिन्प्रयोगे विवक्षितम् । किं पुनरविवक्षाकारणमित्याशङ्क्याह—धात्वर्थेति । धात्वर्थमात्रं ही[४]ह जिज्ञासितम् । घण्टादय (घण्टा ध्वनति वा न वेति), न पुनर्घण्टाध्वनने-

---

१. भावानायाम्—**च**

२. अन्यप्रतिपत्तिः. **छ**

३. नान्यस्मिन्—**च**

४. हि न जिज्ञासितम्—**छ**

2

**न विवक्षितम्, धात्वर्थमात्रजिज्ञासनात्, तथा च नाभूतप्रादुर्भावनम् । अतो वस्तुतस्तदभावेऽपि प्रयुज्यमानस्य करोतेरिह कुतस्तदर्थः ।**

**तथा का क्रिया? पाकः इति धात्वर्थ[१]मात्राभिधानात् भावनाया अपरामर्शात् भावनाविशेषनिमित्तमैकाधिकरण्यम् ।**

---

नान्यज्जनयति वा न वेति । भवतु धात्वर्थमात्रस्य जिज्ञासितत्वम् , किमत[२] इत्याशङ्क्याह— तथा च नाभूतप्रादुर्भावनमिति । अभूतप्रादुर्भावनमिति भावनोच्यते । यदा धात्वर्थमात्र एव करोतेः प्रयोगो निश्चितः स्यात्, तथा च सति न भावना (करोत्य)-भिधेया सिध्यति । मा भूत्तर्हि तत्र करोतेः भावनार्थत्वम् , प्रयोगान्तरे तु भवत्येवेत्याशङ्क्याह—अतो वस्तुत इति । यत्र व्यभिचारः करोतेर्भावनां प्रति तत्रान्यार्थत्वस्य निश्चितत्वात् अन्यत्रापि तादर्थ्यनिश्चयाभावादन्यार्थत्वमेव ग्रहीतुं युक्तम्, न भावनार्थत्वमित्यर्थः ।

द्विधा भावनाया अभावे करोतेः प्रयोग इत्युक्तम् । तत्रैकधा भाव्याभावेन भावनाया अभावे प्रयोगो दर्शितः । इदानीं भावनावाचिनश्शब्दस्याख्यातप्रत्ययस्याभावेन भावनाया अभावे निश्चिते करोतेः प्रयोगं दर्शयति—तथेत्यादिना । 'का क्रिया' इति केनचित्पृष्टोऽन्यः[३] प्रतिवक्ति 'पाकः' इति । तत्र पाकशब्देन घञन्तेन धात्वर्थमात्र-

---

१. मात्रस्यात्र जिज्ञासनात्—**ग, घ, ङ.** भावनायास्त्वपरामर्शः ...**क, ख.**

२. इत्यत आह—**छ**

३. अन्यं—**छ**

**गम्यमानापेक्षमिति चेत्—न, तिङन्तेष्वपि[१]प्रसङ्गात्। प्राधान्यात्तिङन्तेष्वभिधेयत्वमिति चेत्–न, इहापि तद्विशेषप्रश्नाद्धात्वर्थस्य**

---

मभिधीयते, [२]न भावना, तत्र तस्य सामर्थ्याभावात् । भवतु पाकशब्देन भावनाया अनभिधानम्, कथमेतावता करोतेर्भावनावचनत्वमपाक्रियते इत्याशङ्कयाह–न भावनाविशेषनिमित्तमिति । यदि पाकशब्देन भावना न परामृश्येत तदा तस्य न भावनाविशेषाभिधानमुखेन करोतिसामानाधिकरण्यमुपपद्यते, अपि तु धात्वर्थविशेषाभिधानमुखेनैव । ततश्च करोतेर्धात्वर्थसामान्यातिरेकेणार्थान्तरं न सिध्येत् । ननु पाकशब्देन यद्यपि नाभिधीयते भावना तथापि तदभिहितार्थानुपपत्त्या [३]गम्यते, पाकस्य भावनाफलत्वात्। अतो गम्यमानभावनाविशेषापेक्षमेवैकाधिकरण्यम्, न धात्वर्थविशेषापेक्षमिति शङ्कते—गम्यमानेत्यादिना । अस्योत्तरमाह—न, तिङन्तेष्वपीति । न पाकशब्दस्य गम्यमानभावनापेक्षं सामानाधिकरण्यमिति शक्यते वक्तुम्, तिङन्तेष्वपि तथाप्रसङ्गात् । यथा घञन्ते भावनाभिधानमन्तरेणाप्युपपद्यते करोतिसामानाधिकरण्यम्, तथा तिङन्तेष्वपि; विशेषाभावात् । ततश्च तिङन्तानां भावनावचनत्वमिष्टं न सिध्यतीत्यभिप्रायः।

इदानीं घञन्तेभ्यस्तिङन्तेषु विशेषं शङ्कते–प्राधान्यादिति । यतस्तिङन्तेषु [४]भावनायाः प्राधान्यम्, अतोऽभिधेयत्वं युक्तम् । भावनापरो हि तिङन्तानां प्रयोगः, धात्वर्थपरस्तु घञन्तानामिति । एवं विशेषमाशङ्क्याविशेषं दर्शयति–इहापीति । तिङन्तानां भावनापरत्वनिश्चये यत्कारणं तद्घञन्तानामपि समानम् । तथाहि–यथा

---

१. प्रसङ्गप्राधान्यात्—ख

२. न तु भावना—च

३. गम्यपाकस्य—च

४. भावनायां—च

**तल्लक्षणार्थत्वात्प्राधान्यमभिन्नम्। अतः सकलधात्वर्थानुयायिनः करोतेः तत्सामान्यमर्थो नाभूतप्रादुर्भावनमिति शब्दप्रवृत्तिविदः**

---

'किं करोति' इति प्रश्नस्य भावनाविशेषविषयत्वात् पचतीति प्रतिवचनस्यापि तत्समानाधिकरणस्य [1]तत्प्रधानत्वं गम्यते, तथा 'का क्रिया' इत्यस्यापि क्रियाविशेष-विषयत्वात् क्रियायाश्च भावनात्वाभ्युपगमात् 'पाकः' इति प्रतिवचनस्य तत्समानाधि-करणस्य भावनाप्रधानत्वं गम्यते ।

ननु पाकशब्दस्य भावनाप्राधान्यमशक्यमभ्युपगन्तुम्; तस्य धात्वर्थमात्रे सामर्थ्यादित्याशङ्क्याह—धात्वर्थस्येति । यद्यपि पाकशब्देन धात्वर्थ एवाभिधीयते तथापि [2]भावनालक्षणार्थः न स्वरूपप्रधानः[3] । का क्रियेति प्रश्नविषयं[4] भावनाविशेषं लक्षयितु पाकशब्देन तत्संबन्धिधात्वर्थोऽभिधीयत इत्यर्थः । ततश्चोभयत्र तिङन्ते घञन्ते च भावनाप्रधानत्वमभिन्नं अविशिष्टमिति यावत् ।

एवं श्लोकस्य पूर्वार्धं व्याख्यायेदानीं उत्तरार्धं व्याचष्टे—अतस्सकलधात्वर्थेत्या-दिना । यत उक्तेन न्यायेन भावना करोतेरर्थो न संभवति; अतो धात्वर्थसामान्यमेव तस्यार्थः, सर्वधात्वर्थानुगमात्—यथा गोशब्दस्य खण्डमुण्डाद्यशेषपिण्डानुयायिनः तत्सा मान्यं गोत्वमर्थः । न च भावाभाव इव धात्वर्थसामान्याभावेऽस्य प्रयोगो दृष्टः, येन पूर्ववदनवक्लृप्तिस्स्यात् । अतो धात्वर्थसामान्यमेव करोतेरर्थः, नाभूतप्रा-दुर्भावनम् न भावनेत्येवं शब्दप्रवृत्तिविदः प्रतिपेदिरे ॥ उक्तमर्थमाप्तोक्तिभिस्संवादयति—तथा चोचुरिति ।

---

१. प्रधानता—**च**
२. स्वभावना—**च**
३. प्रधानम्—**च**
४. विषय.—**छ**

**प्रतिपेदिरे। तथा[1] चोक्तुः—"क्रियावचना[2] धातवः। कथं ज्ञायते क्रियावचनाः पचत्यादयः इति? यदेषां करोति[3]ना सामानाधिकरण्यम्। कृभ्वस्तयः क्रियासामान्यवचनाः, क्रियाविशेषवचना[4]श्च पचत्यादयः"॥**

**अथ मतं [5]न भावरहितो धात्वर्थः। सर्वेण तेन कि[6]चिदसदुपजन्यते इति[7]। तन्न।**

---

एवं तावद्भावनाभावे प्रयोगात् सकलधात्वर्थानुगमाच्च करोतेस्तत्सामान्यमर्थः, न भावना। अतः पचत्यादीनामपि तत्समानाधिकरणानां न धात्वर्थविशेषातिरिक्तभावनार्थत्वमित्युक्तम्। तत्रेदानीं शङ्कते—अथ मतमित्यादिना। अयमभिप्रायः—अस्ति तावत्सकलधात्वर्थानुगता भावना। तत्सामान्यं वदतः सैव व्यापारात्मिका करोत्य(तेर)र्थः। कथं पुनः सर्वधात्वर्थसंबन्धिनी भावना अस्तीति? उच्यते, सर्वेण धात्वर्थेन किंचित् असदुपजन्यते। न चोपजननया विनोपजनयितव्यं संभवति। उपजनना च भावना।

नन्वचेतनसंबन्धिनि धात्वर्थे भाव्यं किंचिन्नास्ति? न नास्ति; नहि सरति समीरणे दहति वा दहने [8]प्रागभूतं किंचिन्न प्रादुर्भवति। तस्मात्सकलधात्वर्थेषु भाव्य-

---

१. यथा—ङ
२. वचनो धातुः—ग, घ, ङ.
३. करोतिसामाना—क, ग, घ, ङ.
४. च नास्ति—ग, घ, ङ.
५. नाभावरहितो धात्वर्थः—क, ख. न भाव्यरहितो—ग, घ. नहि भाव्य—ङ
६. किञ्चिदुपजन्यते—क, ख. किञ्चिदसज्जन्यते—ग.
७. इति—नास्ति क, ग.
८. प्राग्भूतं—छ

**सर्वत्र यदि धात्वर्थेभाव्यं सैवास्तु भावना ।**

**स्वर्गभूतिसमर्थोऽन्यो व्यापारः [१]कोऽनुपागतः ॥ ४ ॥**

**भाव्य[२]भवनसमर्थो हि व्यापारो भावना । धात्वर्थ एव चेत् कस्यचिदात्मलाभानुकूलात्मा, स एव भावना अस्तु, न तदतिरिच्यमानशरीरा ।**

---

नियमात् भावनापि भवत्येवेति सैव करोतेरर्थः, [३]तत्समानाधिकरणानां च पचत्यादीनां इति साम्प्रतम् । अत्रैषा अक्षरयोजना—अथ मतम्—अथैदमभिप्रायः—न भावरहितो भावनारहितो धात्वर्थः, यतस्तेन सर्वेण धात्वर्थेन किंचिदसद्वा प्रागभूतमुत्पद्यते भाव्यते इति । एतन्निराकरोति—तन्न—

सर्वत्र यदि धात्वर्थे भाव्यं सैवास्तु भावना । स्वर्गभूतिसमर्थोऽन्यो व्यापार कोऽनुपागतः ॥ अयमर्थः—यदि सर्वत्र धात्वर्थे भाव्यं नियमेन किंचिदभ्युपगम्यते, तर्हि धात्वर्थ एव भाव्यभवनानुकूलस्वभावत्वाद्भावनेत्यभ्युपगम्यताम्, किमर्थान्तरेण कल्पितेन? एतदेव च न्याय्यम् । यागादन्यस्स्वर्गभवनसमर्थो व्यापारः कः? न कश्चिदपि, अनुपलब्धेरित्यर्थः । एतद्व्याचष्टे—भाव्यभवनेत्यादिना । इदं हि भावनाया भावनात्वं यदुत भाव्यभवनसमर्थव्यापारत्वम् । तत्र यदि धात्वर्थ एव कस्यचिदात्मलाभानुकूलस्वभावव्यापारात्मा स्यात्, तर्हि स एव भावना अस्तु, न ततस्तत्त्वान्तरम्; भावनास्वरूपलक्षणस्य तत्रैव भावादिति श्लोकपूर्वार्धस्यार्थो व्याख्यातः ।

---

१. कौतु चागतः—**ख.**

२. फत्तभवन—**क, ख.**

३. 'तत्समानाधिकरणानां' इत्यारभ्य 'धात्वर्थः' इत्यन्तो भागो नास्ति—**च.** मातृकायाम् ।

**[1]एवं चैतत्; न खलु स्वर्गादिफलोदयानुकूलं यागादिधात्वर्थभेदप्रभाव्यं [2]व्यापारान्तरमुपलभामहे [3]यद्भावनाशब्दोऽभिनिविशेत[4]। यागादय एव तु स्वर्गादिफलोदयाय [5]चोदितास्तत्समर्थतया तथाव्यपदेशमर्हन्ति। अव्यापाररूपत्वाद्धात्वर्थस्य नैवम्, इति यदि मन्येत, वक्तव्यो[6] व्यापारः–यदि समीहितकार्यो-**

---

एवं चैतदित्यादिनोत्तरार्धं व्याचष्टे। अयमर्थः–न केवलं भावनाया धात्वर्थात्तत्त्वान्तरत्वस्यानध्यवसायमात्रम् अपितु तावन्मात्रत्वाध्यवसायोऽपि शक्यते, यतः न स्वर्गादिफलोदयानुकूलो [8]यागादिधात्वर्थविशेषनिष्पाद्योऽन्यो व्यापार उपलभ्यते, [9]यं भावनाशब्दो धात्वर्थं परित्यज्याभिधेयतया अवलम्बेत। कथं तर्हि यागादीनां भावनाव्यपदेशभाक्त्वमित्याशङ्क्याह – यागादय इति। यतो यागादय एव स्वर्गादिफलोदयार्थतया चोदिताः अतस्त[10]दुत्पादनसमर्थाः, ततश्च भावनाव्यपदेशमर्हन्ति इति॥ तत्र शङ्कते–अव्यापारेत्यादिना। अयमर्थः–भाव्यभवनसमर्थो हि व्यापारो भावना। तत्र यद्यपि धात्वर्थस्य भाव्यभवनसामर्थ्यम्, तथापि न व्यापाररूपत्वमस्ति, तस्य स्वभावसिद्धत्वात्। अतो न भावनात्वमिति। एवमाशङ्क्योत्तरं वक्तुं व्यापारस्वरूपं

---

१. एवं चेन्न—**ग**
२. व्यापारभेद—**ख**
३. यं भावनाशब्दो—**क, ग, घ, ङ.**
४. अभि नास्ति—**ख**
५. मोदिता—**ग, घ, ङ.**
६. वक्तव्यः स व्यापारः—**ग, घ, ङ.**
७. धात्वर्थो विधिमिममतिवर्तते—**क, ख.**
८. यागादिर्धात्वर्थ—**छ**
९. यद्भावना—**छ**
१०. स्तदुपादान—**च**

**पजननानुगुणः साध्यस्वभावो धर्मभेदः तदपेक्षया तथा व्यपदेश्यः, न [1] धात्वर्थस्तथाविधत्वमतिवर्तते इति । अथ परिस्पन्दः, तदा [2] तदात्मनां तावत् धात्वर्थानामविहतं भावनात्वम् ।**

---

विकल्पयति—वक्तव्य इत्यादिना । किं समीहितकार्योदयानुकूलः साध्यस्वभावो धर्मविशेषो व्यापारः, किं वा परिस्पन्दः, आहोस्वित्प्रयत्नः इत्येवं विकल्पाभिप्रायेण 'वक्तव्यो व्यापारः' इत्युक्त्वा आद्यं[3] विकल्पं विविक्तमनुकीर्तयति—यदीत्यादिना । समीहितकार्योपजननानुगुणस्य साध्यस्वभावस्य धर्मविशेषस्य भावनाव्यपदेशात्वं कथम् [माशङ्क्यत] इत्याशङ्क्याह—तदपेक्षयेति । भाव्यभवनानुगुण्यापेक्षया । तथा व्यपदेश्यः—भावनेति व्यपदेश्य इति। इदानीमस्मिन्पक्षे दूषणमाह—न धात्वर्थ इत्यादिना। धात्वर्थोऽपि तथाविधत्वम्—यथोक्तलक्षणत्वम् , नातिवर्तते, अतः स एव व्यापारो भावना चेति साम्प्रतमिति ।द्वितीयं विकल्पं दूषणायोत्थापयति—अथ (परि) स्पन्द इति । तत्र दूषणमाह—तदि(दे)त्यादिना । ये तदात्मानः—स्पन्दात्मानः धात्वर्थाः तेषां भावनात्वमविहतम् ।

ननु कथं परिस्पन्दात्मकत्वं धात्वर्थस्योच्यते, यावता गच्छत्यादावपि(स्ति) तद्व्यतिरिक्तः संयोगविभागात्मा धात्वर्थ इति चेत्—नैष दोषः; परिस्पन्दबुद्धेः संयोगविभागातिरिक्तव्या-

---

१. तदात्मना धात्वर्थानां—**ग, घ, ङ.**

२. अस्पन्दमानसाधनेषु—**क, ग. घ, ङ.**

३. द्यं कल्पम्—**छ**

**[१]अस्पन्दमानकर्तृकेषु[२] 'आस्ते' 'यजते' 'जानाति' इति चात्मकर्तृकेषु तदभावप्रसङ्गः ।**

**आत्मकर्तृकमेवाह [३]व्यापारं योऽपि भावनाम् ।**
**कर्त्रन्तरेऽस्य नाख्यातं [४]धीसाम्यान्नोपचारतः ॥ ५ ॥**

---

पारविषयसद्भावे वक्ष्यमाणनीत्या प्रमाणासद्भावात् संयोगविभागात्मा धात्वर्थ एव परिस्पन्दबुद्धेर्विषयस्संपद्यत इत्यभिप्रेत्येदं धात्वर्थानां स्पन्दात्मकत्वमुक्तमिति । अथवा—संयोगविभागातिरिक्तं परिस्पन्दमेव धात्वर्थं गृहीत्वैवमभिधीयते इति । तत्रैव दूषणान्तरमाह—अस्पन्दमानेत्यादिना । 'आस्ते' 'शेते' इत्यादिषु स्पन्दरहितदेहकर्तृकेषु व्यापाररूपत्वाभावप्रसङ्गः । तथा च सति दर्शनेन विरोधः स्यात् । न चैवमाशङ्कितव्यम्, परिस्पन्दाभावेऽपि तद्योग्यस्य भावात् तन्निबन्धनो व्यापारप्रत्यय इति । परिस्पन्दायोग्यात्मकर्तृकव्यापाराभावप्रसङ्गादित्येतदुदाहरणान्तरोपादानेन द्योतयितुमाह— 'यजते' 'जानाति' इति । आत्मा हि सर्वगतत्वेनामूर्तत्वेन च परिस्पन्दायोग्य इति तस्य व्यापाराभावेन कर्तृत्वाभावात् 'यजते' 'जानाति' इत्यादिव्यापारानुपपत्तिप्रसङ्गः शास्त्रवैयर्थ्यप्रसङ्गश्चेति भावः ॥

इदानीं प्रयत्नव्यापारभावनापक्षमनुभाष्य दूषयति—

आत्मकर्तृकमेवाह [५]व्यापारं योऽपिः भावनाम् । कर्त्रन्तरेऽस्य नाख्यातं धीसाम्यान्नोपचारतः । (इति) ॥ आत्मकर्तृक एव प्रयत्नव्यापारो भावनेति यो वदति तस्य पक्षे

---

१. अपरिस्पन्दमान—ख.

२. साधनेषु—क, ग, घ, ङ.

३. व्यापारोऽपि भावना ग, घ, ङ. आत्मकर्तृकमेवाह—इत्ययं कारिकाभागः उव्वेकवृत्तिग्रन्थेन संयोजितः सरस्वतीभवनमुद्रितपुस्तके—घ.

४. धीस्वाम्यात्—क.

५. व्यापारो—च.

**योऽपि मन्यते सकलपुरुषप्रत्यात्मवेदनीयः चेतनस्यात्मन [1]औदासीन्यप्रच्युत्युपलक्ष्यमाणात्मा[2] [3]प्रयत्नशब्दसंवेदनीयो व्यापारो भावना, कर्त्रन्तरेऽस्य नाख्यातं प्रयुज्येत—'कूलं पतति', 'रथो गच्छति', 'अग्निर्ज्वलति' [4]इति। [5]न च [6]'श्रृणोत ग्रावाणः'**

---

अचेतने रथादौ कर्त्रन्तरे आख्यातप्रयोगो न स्यात्, तत्र तदभिधेयप्रयत्नाभावात्। न च तत्रौपचारिकः प्रयोगः, धीसाम्यात्—चेतनाचेतनविषययोः प्रयोगयोः प्रतीतिवैलक्षण्याभावादिति। एतद्व्याचष्टे—योऽपि मन्यत इत्यादिना। सकलपुरुषप्रत्यात्मवेदनीय इति प्रयत्नसद्भावे मानसं प्रत्यक्षमुपन्यस्यति। औदासीन्येत्यादिना शरीरचेष्टालिङ्गकमनुमानम्। तथाहि—सत्यप्यात्मसंबन्धे कदाचिदेव शरीरं चेष्टते; ततश्च तद्धेतुकत्वेनात्मसमवायी कश्चिद्व्यापारोऽनुमीयते; स प्रयत्न इत्युच्यत इति। तत्रैव हेत्वन्तरमाह—प्रयत्नशब्देति। प्रयत्नशब्दश्च साधुत्वेनानुशिष्टो न विना कारणेनानर्थको भवितुमर्हति[7]। न च तस्यार्थान्तरं संभवति। तस्मादस्त्यात्मकर्तृको व्यापारः प्रयत्नाख्यः, स च भावनेति। एवं श्लोकस्य पूर्वार्धव्याख्यानेन परमतमनुभाष्य तन्निराकरणार्थतयोत्तरार्धं व्याचष्टे—कर्त्रन्तरेऽस्येत्यादिना। कर्त्रन्तरे प्रयोगं दर्शयति—[8]तू(कू)लमित्यादिना। ननु [9]समारोपेणायं प्रयोगः स्यादित्याशङ्क्याह—न चेति। यथा 'श्रृणोत ग्रावाणः' इत्यादौ

---

१. औदासीन्यप्रत्युप—ग, घ, ङ.
२. लक्षणीयात्मा....क.
३. प्रयत्नादिशब्दप्रवेदनीयो—ग, घ, ङ.
४. इति—नास्ति—क, ग, घ, ङ.
५. 'न च' इत्यादि 'विशिष्यत इति' इत्यन्तोऽयं भागः उव्वेकवृत्तावेवोपलभ्यते—ग, घ, ङ.
६. श्रृण्वन्ति—ग, घ, ङ.
७. मर्हतीति—च.
८. तुल्यमि—च.
९. समारोपणोऽय—छ.

**इतिवत्समारोपेण[1] प्रयोगः, प्रत्ययस्यावैलक्षण्यात्। नहि[2] 'रथो गच्छति' 'करी गच्छति' इति प्रत्ययो विशिष्यते[3]।**

**अपि च—**

**धातुगोचरनिर्वृत्तिपर्यन्तत्वाच्च कर्मता।**
**सर्वत्र तस्य न परः करणाभिमतेऽप्यसौ॥ ६॥**

**पुरुषप्रयत्नो[4] हि [5]धात्वर्थनिर्वृत्तिमात्रापवर्गी; सर्वत्र**

---

समारोपेण प्रयोगो न तथा पततीत्यादौ, प्रत्ययस्यावैलक्षण्यादिति[6]। एतदेव दर्शयति—नहीति।

इदानीं प्रयत्नव्यापारभावनापक्षे दूषणान्तरमाह—

धातुगोचरनिर्वृत्तिपर्यन्तत्वाच्च कर्मता।
सर्वत्र तस्य न परः करणाभिमतेऽप्यसौ॥ (इति)॥

अयमर्थः—धातुगोचरः—धात्वर्थः, तस्य निर्वृत्तिः पर्यन्तः—अवधिः—यस्य सोऽयं धातुगोचरनिर्वृत्तिपर्यन्तः प्रयत्नः। ततश्च धात्वर्थस्य पुरुषव्यापारलक्षणायां भावनायां कर्मत्वापातः। सर्वत्र—काम्ये नित्ये नैमित्तिके च। न चैवं मन्तव्यं एकत्र कर्मभूतोऽपि धात्वर्थो व्यापारान्तरे करणत्वं प्रतिपद्यते इति, व्यापारान्तरानुपलब्धेः। न खलु काम्ये

---

१. इतिवद्धर्मारोपेण—क, ख.
२. हि—नास्ति—क.
३. विशिष्यत इति—ग, ङ.
४. प्रयत्नोऽपि—ख
५. धात्वर्थमात्रावगाही—क; धात्वर्थमात्रापवर्गी इति—ख; धात्वर्थनिर्वृत्तिमात्रापवर्गात्—ग, घ, ङ.
६. दित्यादि—छ.

**काम्ये नित्ये नैमित्तिके च तत्कर्मताप्रसङ्गः, व्यापारविशेषानुपलम्भात् । नहि काम्येऽपि[१] प्रयोगे करणाभिमतस्य धात्वर्थस्य परस्तात्तत्साध्यस्वर्गादिफलविशेषसाधनः[२] प्रयत्नभेदः समस्ति ।**

**[३] अपूर्वन्नाम न प्रयत्नभेदः, [४] न कर्तृव्यापारः, करणव्यापार[५]त्वाभ्युपगमात् । [६] अन्यथा व्यापारसङ्करात्कारकभेदाभावप्रसङ्गादित्यलमनेन[७] ॥**

---

प्रयोगे करणत्वाभिमतेऽपि धात्वर्थे तत्कर्मकाद्व्यापाराद्भेदेन तत्करणकोऽन्यो व्यापार उपलभ्यते इति । एतदेव विवृणोति—पुरुषप्रयत्नो हीत्यादिना । यतः पुरुषस्य प्रयत्नो धात्वर्थनिर्वृत्तिमात्रपर्यवसायी, अतः सर्वत्र तस्य धात्वर्थस्य कर्मत्वमेव स्यात् न करणत्वम् । व्यापारविशेषानुपलम्भनात् (लम्भात)—व्यापारभेदानुपलम्भनादिति । एतदेव दर्शयति—नहीति । यत्र करणत्वेनाभिमतो धात्वर्थः काम्ये, तत्रापि तस्य परस्तात् उत्तरकालम्, तेन धात्वर्थेन साध्यस्वर्गादिफलविशेषभावनालक्षणः प्रयत्नविशेषः संभवति ।

ननु अपूर्वं नामास्ति व्यापारान्तरमित्याशङ्क्याह–अपूर्वं नामेति । अपूर्वन्तु न प्रयत्नविशेषः, यतो नासौ कर्तृव्यापारः; करणस्य यागादेर्व्यापारत्वेन तस्याभ्युपगमात् । यदि करणव्यापारोऽपि कर्तुः स्यात्, तदा व्यापारसङ्करात् कारकभेदस्याभावः प्रसज्येत,

---

१. 'अपि' नास्ति—ग, घ, ङ.
२. साधनप्रयत्न—क, ग, घ, ङ.
३. अपूर्वस्तु—क, ख; अपूर्वन्तु—ग, घ. ङ
४. न च कर्तृ—ग, घ
५. व्यापाराभ्युप—क, ख, ङ.
६. अन्यथा कारकव्यापार—ख.
७. मतिप्रसङ्गेन—ग, घ, ङ

**कर्मणो भावभेदं यः[१] फलावधितया [२]वदेत् ।**
**तस्यादृष्टफलेष्विष्टमनुष्ठानं न युक्तिमत् ॥ ७ ॥**

**धातुर्हि कर्म स्वरूपमात्रेणोपादत्ते । आख्यातोप[३]संधानात्तु**

---

व्यापारव्यवस्थया हि कारकव्यवस्थेति । तदेतदाह—अन्यथेति । प्रासङ्गिकीं व्यापार-स्वरूपचिन्तामुपसंहरति—अलमिति ।

इदानीं प्रसङ्गान्मीमांसकैकदेशीयपरिकल्पितं धात्वर्थस्यैव फलावधिकस्य फल-भावनात्वमनुभाष्य निराचष्टे—

[४] कर्मणो भावभेदं यः फलावधितया वदेत् ।
तस्यादृष्टफलेष्विष्टमनुष्ठानं न युक्तिमत् ॥ (इति) ॥

अयमाशयः—न धात्वर्थात्तत्त्वान्तरं भावना, किन्तु स एव फलावधिकेन रूपेण भावनेत्युच्यते इति यो मन्यते, तस्य पक्षेऽदृष्टार्थेषु यागादिषु नियतोपक्रमोपसंहारमिष्ट-मनुष्ठानमनुपपन्नं स्यादिति तात्पर्यार्थः । इदानीमक्षराणि विव्रियन्ते । कर्मणो धात्वर्थस्य भावभेदं भावनाख्यविशेषं फलावधितया फलपर्यन्तरूपेण यो वदेत्, अथवा कर्मणो धात्वर्थात् भावस्य भावनाया भेदं विशेषं फलावधितया यो वदेदिति, तस्य पक्षेऽदृष्ट स्वर्गादिफलेषु कर्मसु यागादिषु नियतोपक्रमोपसंहारत्वेनेष्टमनुष्ठानं न युक्तिमदिति । एतदेव विवृणोति—धातुर्हीत्यादिना । अयमर्थः—धातुः कर्म स्वरूपेणोपादत्ते, तस्य फला-वधिकरूपं साध्यतारूपं च परिहृत्य; आख्यातसंबन्धात्तु फलावधिकेन भावनारूपेणाव-गम्यत इति । एतदेव प्रपञ्चयति—तथा हीत्यादिना । यावता कर्मक्षणोत्पादनिच-

---

१. यत्—ख.
२. भवेत्—क.
३. सदानात्तु,—क, ग, घ, ङ.
४. कर्मण इति—क.

[१]भावनात्मना अवगम्यते । तथाहि—यावता [२]कर्मक्षणोत्पादनिच-येनेष्टमर्थं साधयति तावत्याख्यात प्रयुज्यते । अतस्तेन तेन फलेना[३]वच्छिद्यमानः [४]स स कर्मक्षणोत्पादनिचयः तेन तेनाख्या-तेनाभिधीयते । तदिदं फलावधिकं कर्म भाव्यतया[५] अवसीयते, ना-भाव्यमानं [६]फलभावनायालमिति । [७]फलोत्पादिका अवस्था

---

येनाभिलषितमर्थं साधयति तावत्याख्यातं प्रयुङ्क्ता(ज्य)ने । नैरन्तर्येणोत्पद्यमानानां[८] क्षणिकानां कर्मणां समुदायेऽभिलषितफलनिवृ(वृ)त्तिपर्यन्ते प्रयोगादाख्यातप्रत्ययस्य तादर्थ्यं गम्यत इत्यर्थः । अतस्तेन तेनेत्यादेरयमर्थः—यद्यद्धात्वभिधेयेन येन येन कर्मक्षणनिचयेन यद्यत्फलमुत्पद्यते तेन तेन फलेन ओदनादिना स्वर्गादिना वा अवच्छिद्यमानः [९]स स-कर्मक्षण(णोत्पाद)निचयः तस्य तस्य धातोः परेणाख्यातप्रत्ययेनाभिधीयते 'पचति' 'यजति' इत्यादिना । कथं पुनरस्य फलावधिकस्य कर्मणः साध्यतारूपसिद्धिरित्याशङ्क्याह—तदिदमिति । फलावच्छिन्नं कर्म प्रतीयमान भाव्यतया प्रतीयते; कुत इति चेत्तत्राह—नाभाव्यमानमिति । यतः तत्कर्म अभाव्यमानं असाध्यमानं फलभावनाय फलोत्पादनाय नालं न समर्थमिति ।

---

१. भावात्मना अवगम्यते—**ख**.
२. कमणोत्पादनी च येनामीष्टमर्थं— **ख**.
३. फलोत्पादनिचयेनावच्छिद्यमानः—**ग, घ, ङ**.
४. नः स कर्मक्षणोत्पादनी चय —**ख**.
५. भावनात्मतया—**ग, घ**.
६. फल—**ग, घ, ङ**
७ फलोत्पादिता—**ख** फलोत्पादिका चावस्था **ङ**
८ त्पाद्यमानाना—**छ**.
९. मान. स कर्म—**छ**

आख्यातार्थः । ' तथा यतेत यथा [1]यत्किञ्चिद्भवति ' इति दर्शितम् । एवं अवस्थाभेदेन [2]भावनाकर्मणोर्भेदः । उक्तं च—' पूर्वापरीभूतं [3]भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्य-

---

उक्तमर्थं मीमांसाभाष्याक्षरानुगुण्येन द्रढयति—फलोत्पादिका अवस्था आख्यातार्थः इति। यदुक्तमस्माभिः तत् ' तथा यतेत ' इत्यादिना भाष्येण दर्शितम् । भावार्थाधिकरणे हि भावशब्द-विचारावसरे यजेत, जुहोतीत्यादीनां शब्दानां भावशब्दत्वे उक्ते तेषां यागादिशब्दत्वमेव न भावशब्दत्वमित्याशङ्कितम् ; तत उत्तरमुक्तम्—न केवलं यागादिशब्दा एवैते किन्तु भावशब्दा अपीति । तत्र हेतुरप्युक्तः—यत एवंजातीयकाच्छब्दाद्यागाद्यर्थोऽवगम्यते भावयेदिति चेत्यर्थद्वयप्रतीत्यन्वयव्यतिरेकानुविधानात् उभयार्थत्वमिति । कथं पुनरेभ्य-श्शब्देभ्यो भावयेदित्यवगम्यते इत्यस्यामाकाङ्क्षायां तेषां भावनार्थत्वं व्याचक्षाणेन भाष्यका-रेण ' तथा यतेत यथा यत्किञ्चिद्भवति ' इति फलसंबन्धोक्त्या कर्मण एव फलोत्पादिका अवस्था [4]आख्याताभिधेया दर्शिता ।

ननु तत्रापि धात्वर्थादर्थान्तरभूतैव भावना फलोपलक्षिता दर्शिता, न तस्यैवा-वस्थामात्रमित्याशङ्क्याह—एवमिति । अवस्थाभेदेनैव भावनाकर्मणोर्भेदोऽभिप्रेतः न स्वरूपभेदेन । स्वरूपभेदे तु फलानपेक्षया स्वशब्देनैव स्वरूपोक्तिसंभवात् फलसंबन्धो-क्तिरनर्थिका । यदा तु कर्मण एव फलोत्पादिकावस्था विवक्षिता स्यात् तदा तस्याः फलाधीत(नं) निरूपणमिति तदुक्तिरर्थवती स्यादिति । निरुक्तमेतद्भाष्ये[illegible]दोक्तमित्याह—उक्तमिति । अयमर्थः—पूर्वापरीभूतो यो भावः तमाख्यातप्रत्ययेनाचष्टे वक्ता व्रजति

---

१. ' यत् ' नास्ति....ग, घ.
२. भावकर्मभेदः—ख.
३. माख्यातमाचष्टे—ग.
४. ' आख्याताभिधेया ' इत्यादिः ' यदा तु ' इत्यन्तो भागः ङ. मातृकायां नास्ति ।

**पवर्गपर्यन्तम्' [१] इति ॥ तत्र प्रतिक्षणमपवर्गवतः कर्मणः[२] कावुपक्रमापवर्गौ[३] ? फलापेक्षया तु कल्प्येते इति यो वदेत्, तस्य प्रत्यक्षफलेषु कर्मसु काममारम्भविरामौ कल्प्येते, [४] पुरः परस्ताच्च तत्पर्यन्तकर्मक्षणप्रचयपरिज्ञानात् । अदृष्टफलेषु[५]**

---

पचतीति । उपक्रमप्रभृतीति पूर्वापरीभावं दर्शयति । नन्वस्मिन्वाक्ये कथं फलावधिकस्य [६] कर्मक्षणनिचयस्याख्याताभिधेयत्वमभिप्रेतमिति गम्यत इत्याशङ्क्याह— तत्र प्रतिक्षणमिति । अत्र हि कर्मण उपक्रमापवर्गावुक्तौ । तौ च कर्मणः स्वरूपापेक्षया न संभवतः । एकस्य कर्मणः क्षणद्वयेऽवस्थानाभावात् । एकक्षण-सबन्धिन्यनेकक्षणसंबन्धिष्वनेकेषु च तयोरसंभवात् । (?) फलावच्छिन्नं तु कर्मणो यद्रूपं फलोत्पादकरूपेण निरूप्यमाणं तस्य सकलक्षणानुयायिनः पूर्वापरीभावसंभवाद्युक्तावुपक्रमोप-संहाराविति । तदेव(वं) फलावधिकं रूपमाख्याताभिधेयमिहोक्तमिति गम्यते । तस्माद्धात्वर्थ एव फलावार्धको भावना न ततस्तत्त्वान्तरमिति यो वदेदिति श्लोकस्य पूर्वार्धं परमतानुवादपरं व्याख्यायेदानीं तदुत्तरार्थतयोत्तरार्धं व्याचष्टे—तस्येत्यादिना । तस्य एवं वदतः पक्षे ; यद्यपि प्रत्यक्षफलेष्वन्वयतिरेकसिद्धफलेषु कर्मस्वारम्भविरामावुपपद्येते । पुरः—पूर्वस्मिन्काले । परस्ताच्च—उत्तरस्मिन्काले; तत्पर्यन्तस्य—फलपर्यन्तस्य कर्मणः(णां) समुदायस्य परिज्ञानसंभवात्

---

१. इति—नास्ति क. ग.
२. कर्मणा—क.
३. वर्गौ स्याताम्—क. ख.
४. पुरस्तात्—ग.
५. फलकेत्व—ग.
६. कर्मत्वक्षण—छ.

**त्वनिरूपितफलपर्यन्तपरिमाणभेदेषु[१] कथं प्रवर्तते ? नहि नियुक्तोऽप्यप्रसिद्धविषयविशेषः प्रवर्तितुं [२]प्रभवति । प्रवृत्तौ वा पुरः [३]फलादर्शनात् [४]अकृतशास्त्रार्थमात्मान[५]मवबुध्यमानो न विरन्तुमर्हति । शास्त्रात्फलोत्पत्तिं प्रतिपद्य विरंस्यतीति चेत्–न; कृतशास्त्रार्थस्य फलोत्पत्तेः, फलोत्पत्त्या च [६]कृतशास्त्रार्थत्वादितरेतराश्रयप्रसङ्गादित्यलं[७] प्रसङ्गेन ।**

---

पूर्वापरकोट्योस्सुज्ञानत्वादिति यावत्, तथापि, अदृष्टफलेषु शास्त्रीयेषु कर्मसु न कथञ्चित्प्रवर्तेत, यतस्तान्यनिरूपितफलपर्यन्तपरिमाणभेदानि। नहि तेषु फलपर्यन्तपरिमाणविशेषो निरूप्यते, तस्यातीन्द्रियत्वात्। ननु नियोगः प्रवृत्त्यभावे स्वात्मानमलभमानः पुरुषं प्रवर्तयति, ततश्च पुरुषः प्रवर्तते इत्याशङ्क्याह—(नहि) नियुक्तोऽपीति । अयमर्थः—नियोगो विषयज्ञानापेक्षयैव पुरुषं प्रवर्तयति यस्मात् , तस्मादप्रसिद्धविषयविशेषैः(षः) पुरुषो न प्रवर्तितुं प्रभवति । एवमुपसंहारानध्यवसायादप्रवृत्तेरुपक्रम एव न स्यादित्युक्तम् । इदानीमुपक्रमाभ्युपगमेन विरामानुपपत्तिं दर्शयति—प्रवृत्तौ वेति। [पूर्व] कर्मक्षणसमुदायस्य पूर्वकोटेः सुज्ञानत्वात् प्रवृत्तोऽपि पुरुषो न विरन्तुमर्हति, यतोऽयमकृतशास्त्रार्थमात्मानं मन्यते, फलपर्यन्तस्य कर्मणः शास्त्रार्थत्वात्। तस्य च फलादर्शने दर्शनानुप(कृतशास्त्रार्थता)नुपपत्तेः, अकृतशास्त्रार्थस्य च पुरुषस्य विरामानुपपत्तेरिति । तत्र शङ्कते–शास्त्रादिति । मा भूत्प्रमाणान्तरात्फलावगतिः, शास्त्रात्तु फलोत्पत्तिं प्रतिपद्य विरंस्यतीति;

---

१. परिमाणे—ख.
२. प्रवर्तितुमर्हति–ग, घ
३. फलस्यादर्शनात्–क फलदर्शनात्—ङ
४. कृत...ख, ङ.
५. मनवबुध्यमानो—ख, ङ.
६ कृतशास्त्रार्थ इतीतरे—ख.
७. लमतिप्रसङ्गेन—ख, ग,घ.

**प्रकृतमनुसरामः—**

**धातुप्रत्यययोर्वाच्ये प्रतीयेते नहि क्रिये ।**
**संबन्धो नावकल्पेत[१] द्वयोः साध्याभिधायिनोः ॥ ८ ॥**

**[२]'येषान्तूत्पत्तौ' इत्याख्यातवर्ती धात्वर्थः साध्यः[३] क्रियात्मोपेयते । यदि च प्रत्ययः क्रियान्तरमाचक्षीत, क्रियाद्वयं प्रतीयेत—ओदनं पचति, करोति घटमिति यथा। [४]न च तथा प्रतीयते । [५]तस्मान्न धात्वर्थव्यतिरेकिणी आख्यातेषु क्रिया अस्ति ।**

---

एतन्निराकरोति—नेति । कृतशास्त्रार्थस्य हि पुरुषस्य फलोत्पत्तिः शास्त्राच्छक्यावगमा नान्यस्य, कृतशास्त्रार्थत्वमपि फलोत्पत्त्येतीतरेतराश्रयप्रसङ्गः[६] इति । प्रासङ्गिकमुपसंहृत्य प्रकृतमनुसंदधाति—अलमिति । प्रासङ्गिकं ह्येतद्धात्वर्थस्यैव फलावधिकस्य भावनात्वनिराकरणम्, धात्वर्थात्तत्त्वान्तरभूता (तु) भावनेह निराकार्यतया प्रकृता इति ।

धातुप्रत्यययोर्वाच्ये प्रतीयेते नहि क्रिये । संबन्धो नावकल्पेत द्वयोस्साध्याभिधायिनोः ॥ (इति) ॥

धातोस्तावत् क्रियावचनत्वमेष्टव्यम् । यदि प्रत्ययोऽपि भावनाख्यां अन्यां क्रियां आचक्षीत,एकस्मिन्नाख्यातप्रत्ययान्ते पदे द्वे क्रिये प्रतीयेयातां धातुवाच्या प्रत्ययवाच्या च। न च प्रतीयेते । तस्मान्नाख्यातप्रत्ययवाच्या क्रिया अस्ति । अपि च यदि धातुप्रत्ययावुभावपि क्रियाभिधायिनौ स्याताम्, तदा तदभिधेययोः क्रिययोस्साध्यत्वेन समत्वात् परस्परसंबन्धानुपपत्तेः तयोस्समभिव्याहारो न स्यादिति ॥

---

१. कल्प्येत—**ग.**
२. येषामुत्पत्तौ—**ख, ङ.**
३. साध्यक्रियात्मा—**क, ग.**
४. नच तथा प्रतीयते—नास्ति. **ग, घ, ङ.** 'न च प्रतीयते' इति मुद्रितपुस्तके उव्वेकवृत्तौ दृश्यते । अयं मूलग्रन्थ एवेति भाति ।
५. तस्माद्धात्वर्थ ...**ख.**
६. तीतराश्रयप्रसङ्गः....**छ.**

**साध्यस्य [1]च साध्यान्तरेण समत्वादसंबन्धता[2] । ततश्च तदभिधायिनोः प्रकृतिप्रत्यययोः समभिव्याहारानुपपत्तिः । करणत्वाद्धात्वर्थस्यानुपालम्भ इति चेत्—न; '[3]येषान्तूत्पत्तौ'**

---

येषामित्यादिना श्लोकं व्याचष्टे । 'येषाम्' इत्यस्मिन्सूत्रे आख्यातान्ते पदे धात्वर्थः साध्यः क्रियास्वरूप उपेयते । तत्र यदि प्रत्ययोऽपि भावनाख्यं क्रियान्तरमाचक्षीत क्रियाद्वयं प्रतीयेत, यथा—करोति घटम्, ओदनं पचतीति । [4]तथा नेह प्रतीयते । तस्मान्न धात्वर्थव्यतिरिक्ता आख्यातेष्वभिधेया क्रिया विद्यते इति श्लोकपूर्वार्धस्यार्थः ।

साध्यस्येत्यादिनोत्तरार्धं व्याचष्टे । साध्यस्य साध्यान्तरेण असंबन्धता अविद्यमानसंबन्धता । कुतः ? समत्वात् । तथाहि—यदलब्धात्मकं वस्तु तत् स्वनिर्वर्तनसमर्थमर्थान्तरमपेक्षते । न च स्वयमलब्धात्मकमन्यन्निर्वर्तयितुं प्रभवति । न चाकाङ्क्षां योग्यतां चानपेक्ष्य सन्निधिमात्रेण संबन्धो भवति । अतो न साध्यस्य साधनसाकाङ्क्षस्य साध्यान्तरेण तथाविधेन साधनत्वासमर्थेन संबन्धः संभवति । ततश्च तदभिधायिनोः प्रकृतिप्रत्यययोर्नियमेन सहोच्चारणं न स्यात्, अर्थान्वयसापेक्षत्वाच्छब्दान्वयस्य । तत्र शङ्कते—करणत्वादिति । करणत्वं तावद्धात्वर्थस्याभ्युपगन्तव्यम्, 'उद्भिदा यजेत' इत्यादौ धात्वर्थनामधेयादुद्भिदादेस्तत्र तृतीयाविभक्तिश्रुतेः । अतः करणत्वाद्धात्वर्थस्य प्रत्ययाभिधेयया क्रियया संबन्धसंभवान्नोक्तदोष इति । अस्योत्तरमाह—नेत्यादिना । 'येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिः तानि नामानि, तस्मात् तेभ्यः पराकाङ्क्षा न विद्यते, भूतत्वात् स्वे प्रयोगे । येषान्तूत्पत्तौ स्वे प्रयोगो न विद्यते, तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य' इत्यत्र सूत्रद्वये नाम्नां आख्यातानां च सिद्धार्थकत्वं साध्यार्थत्वं च विशेषो दर्शितः। स च धात्वर्थस्य साध्यत्वेऽवकल्पते, तस्य करणत्वे सूत्रविरोधः स्यात् ।

---

१. 'च' नास्ति—**क, ग.**
२. दसंबन्धात्—**क, ख, ङ.** साध्यान्तरेण संबन्धादर्शनात्—**ग, घ.**
३. येषामुत्पत्तौ—**ख.**
४. न तथेह प्रतीयते—**छ.**

**इति विरोधात्। न हि तद्भावनाभिप्रायम्; नामपदार्थस्य धात्वर्थसंबन्धे दृष्टार्थता, [१] अपेक्षितसंबन्धप्रतिपादनार्थत्वात् ।**

**अपि च—**

**न भावे नापि धात्वर्थे काष्ठैरिति समागमः ।**
**अक्रियात्वादन्यरोधाच्छाब्दत्वात् करणस्य च॥ ९ ॥**

---

ननु तत्राख्यातार्थस्य साध्यत्वमुक्तम् । तच्च धात्वर्थस्य करणत्वेऽपि भावनायाः साध्यत्वात्तदभिप्रायेणोपपद्यत इत्याशङ्क्याह—नहीति । तत्र हेतुमाह—[२]नामेत्यादिना । भावार्थाधिकरणे हि दृष्टार्थतान्यायेन नामपदार्थसाध्यत्वं धात्वर्थस्य स्पष्टमभिहितमित्यभिप्रायः। नामपदार्थस्य सिद्धस्य प्रयोजनवता साध्येन धात्वर्थेन [३] साधनत्वेन संबन्धे सति दृष्टार्थता । ततश्चापेक्षितः संबन्धो भवति । यदा तु नामपदार्थस्य फलेन संबन्धः, धात्वर्थस्य च नामपदार्थेन, तदा (अ)दृष्टार्थत्वादनपेक्षितः संबन्धः स्यादित्येतत्प्रतिपादयितुं द्रव्यगुणशब्दानां कर्मशब्दानां च सिद्धार्थत्वसाध्यार्थत्वलक्षणो विशेषः 'येषां' इति सूत्रद्वयेन [४]दर्शितः। तच्च (स च) धात्वर्थस्य साध्यत्वे उपपद्यते । अतो न भावनाभिप्रायमिति ।

अत्रैषा अक्षरयोजना । येषां शब्दानां उच्चारणोत्पत्तौ क्रियमाणायां स्वे अभिधेये विषये य. प्रयोगः तस्मिन्सति रूपं स्वार्थ[५]संबन्धनिष्पन्नमुपलभ्यते, तानि निष्पन्नरूपोपलभ्यमानार्थविषयप्रयोगाणि नामानि । तस्मात्तेभ्यः परं प्रत्याकाङ्क्षा न विद्यते, स्वे प्रयोगे भूतत्वात् शब्दप्रयोगकाले तदर्थस्य निष्पन्नत्वात् । येषां तु शब्दानां उच्चारणोत्पत्तौ (स्वे) सिद्धरूपे अभिधेये प्रयोगो न विद्यते साध्यरूप एवार्थः प्रतीयते, तान्याख्यातानि । तस्मात्तेभ्यः प्रतीयेत फलस्य भावनं अपूर्वं च, सिद्धार्थप्रयोगस्य साध्याश्रितत्वात् केवलस्य सिद्धस्य भावार्थमनाश्रितस्य फलहेतुत्वायोगादिति ॥

न केवलं धात्वर्थस्य करणत्वे सूत्रविरोध एव, पदान्वयविरोधश्च स्यादित्येतदाह—अपि च—न भावे नापि धात्वर्थे काष्ठैरिति समागमः। अक्रियात्वादन्यरोधाच्छाब्दत्वात्करणस्य च॥

---

१ अपेक्षिते—क अपेक्षते...ख.
२. नामार्थेत्यादिना—च
३. साध्यत्वेन—च.
४. दर्शितम्...च
५. सम्बद्ध—च.

न तावद्धात्वर्थसंबन्धिता काष्ठानाम्, [१]करणानां क्रियापेक्षिणां अतदात्मना [२]करणान्तरेण [३]संबन्धयोगात् । नापि भावनासंबन्धिता, तस्याः [४]करणान्तरोपरुद्धत्वात् । [५]नाप्यंशान्तरतया संबन्धः, शाब्दत्वात्करणत्वस्य[६] । तदेवं यत्र [७]करणभावः क्रियायां [८]तस्या अवरुद्धत्वात्, धात्वर्थे च अक्रियात्मन्यकरणत्वात् काष्ठैः पचतीति संबन्धाभावः । अर्थाक्षिप्त-

---

(इति)॥ अयमर्थः—यदि धात्वर्थः करणमिष्यते, क्व तर्हि काष्ठैः पचतीति काष्ठानां संबन्धः, किं धात्वर्थे ? आहोस्वित्प्रत्ययाभिधेयायाम् भावनायाम् ? न तावद्धात्वर्थे, अक्रियात्वाभ्युपगमात । क्रियायां हि करणत्वेन संबन्धो भवति । न च भावनायाम्, अन्येन धात्वर्थेन समानपदोपात्तेनान्तरङ्गेणावरोधात्काष्ठानामनवकाशात् । न चेतिकर्तव्यताभावेन काष्ठानामन्वयः आशङ्कितुं शक्यते, काष्ठैरिति करणभावस्य श्रुतत्वादित्यर्थः । अतदात्मनेत्ययमर्थः—अक्रियात्मना धात्वर्थेन करणकारकस्य संबन्धायोगात । नापि काष्ठादेः करणस्य भावनान्वयः, करणान्तरेण धात्वर्थेनावष्टब्धत्वात । तदेवमित्यादिनोपसंहरति । एवम्—उक्तेन प्रकारेण । क्रियात्मिकायां भावनायां [९] करणान्तरावरोधात्[१०] धात्वर्थस्याक्रियात्वाभ्युपगमात् काष्ठैः पचतीति प्रसिद्धस्य [११] सबन्धस्याभावप्रसङ्ग इति । तत्र शङ्कते—अर्थेत्यादिना । मा भूत्प्रत्ययाभिधेयायां भावनायां सङ्गतिः, मा च भूद्धा-

---

१. कारकाणां—क, ग.
२. कारका—ग.
३. असंयोगात्—क, ख.
४. कारणा—क. कारकान्तरावरुद्धत्वात्-ग.
५. नचांशा—ङ.
६. करणस्य—क, ख.
७. करणाभावः—क, ख. करणता—ङ.
८. तस्यां—क.
९. क्रियान्तरा—छ.
१०. वधेरेधात्—च.
११. संबन्धाक्षिप्तस्या—छ.

**भावनाद्वारकः[१] संबन्ध इति चेत्—न ; [२]अव्यवधानेन संबन्धबोधनात्[३] । नहि मृदा घटम्, काष्ठैः पचतीति समः संबन्धावगमः, एकत्र नैराकाङ्क्ष्यात् , अन्यत्रान्यापेक्षणात्[४] ॥**

**विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते ।**
**कः प्रत्ययार्थो धातूक्तव्यापारो[५] यदि कर्तृता ॥ १० ॥**

---

त्वर्थे पाके साक्षात् , तदाक्षिप्तभावनाद्वारकस्तु भविष्यतीति । कथमिति चेत्—उच्यते । पचतीति तावदयमर्थः प्रतीयते—पाकेन भावयत्योदनमिति । न च निष्पन्नः पाकोऽस्ति । न चानिष्पन्नस्य करणत्वम् । अतोऽर्थात्तन्निष्पत्तिफला भावना [६] प्रतीयते, तस्यां करणान्तरानवरुद्धायां साक्षात्करणत्वेनान्वयः काष्ठानां संभवति तद्द्वारेण पाके । (ते)नायमर्थः—काष्ठैर्निर्वर्तितेन पाकेनोदनं भावयतीति । तदेतन्निराकरोति—न, अव्यवधानेनेत्यादिना । साक्षात्काष्ठानां पाकेनान्वयावगमाच्च भावनान्तरव्यवधानेन संबन्धो घटते । नहीत्यादि । मृदा घटमित्यत्र यथाक्षिप्तकरोतिक्रियाद्वारो घटे मृदस्संबन्धः, साक्षान्न,[७] न तथा काष्ठैः पचतीति, तत्रैव नैराकाङ्क्ष्यावगमात् । तस्मान्नेहार्थाक्षिप्तभावनाद्वारः संबन्धः, किन्तु साक्षादेव । स च धात्वर्थस्य करणत्वे नोपपद्यते । एकत्रेति । काष्ठैः पचतीत्यत्रेत्यर्थः । अन्यत्रेति । मृदा घटमित्यत्रेत्यर्थः । तत्रैव दूषणान्तरमाह—[८] विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्प्यते । कः प्रत्ययार्थो धातूक्तव्यापारे( रो ) यदि कर्तृता ॥ इति ॥

---

१. द्वारः—**क, च.**
२. अव्यवधानसंबन्ध—**ङ.**
३. बोधात्—**क. ग, घ, च.**
४. व्यपेक्षणात्—**ग, घ, च.**
५. व्यापारे—**क, ख, ग, घ, ङ.**
६. 'प्रतीयते' नास्ति **च.**
७. 'न' नास्ति—**छ.**
८. विक्लियन्तीति—**छ.**

**अपि च—'विक्लिद्यन्ति पचन्ति'इत्युभयत्र प्रयोजकव्यापारस्य प्रत्ययेनाभिधानम्[१], धातुभ्यां च विक्लित्तेरिति नार्थभेदः स्यात् । [२]नन्वस्ति तावत्कर्तृभेदेन व्यापारभेदः तदभिधानान्न दोषः । तथाहि—[३]विक्लिद्यन्तीति तण्डुलाः कर्तारः,**

---

विक्लिदिः पचिश्च विक्लित्तिमात्रं सङ्कल्पमात्रं(?) च आचक्षाते । उभयत्रापि प्रत्ययस्तदुपरक्तां[४] कर्तृव्यापाररूपां[५] भावनामिति नार्थविशेषो घटते । अथ कर्तृभेदात्तद्व्यापारभेदः तदुपरञ्जकधात्वर्थभेदेऽपीति यद्युच्यते, तदा तण्डुलानां कर्तृत्वे किं [६]कर्तृलक्षणम्? न तावत्साधनान्तरनियोक्तृत्वम्, तेषां तदभावात् । ततश्चागुणतो धातूपात्तव्यापारत्वमेव कर्तृलक्षणं वाच्यम् । तथा च धात्वभिहितत्वात् कर्तृव्यापारस्य प्रत्ययार्थत्वं न स्यात्, इति श्लोकस्यार्थः । अस्य स्पष्टीकरणाय <u>अपि चेत्याद्याह</u> । अयमभिप्रायः–‘स्वतन्त्रः कर्ता’ इति कर्तृलक्षणम्; स्वातन्त्र्यं च द्वेधा प्रतिभाति—साधनान्तरनियोक्तृत्वमित्येकः प्रकारः, अगुणतो धात्वभिहितव्यापारत्वमित्यपरः । तत्र कर्तृभेदाद्व्यापारभेदं वदतः अनयोः कतरत्कर्तृलक्षणमभिप्रेतम्? पूर्वस्मिन्न कर्तृभेदः, तण्डुलानां तल्लक्षणाभावात्, देवदत्तादय एवोभयत्रापि कर्तारः स्युः । नह्यचेतनानां तण्डुलानां साधननियोगलक्षणं[७] कर्तृलक्षणं संभवति । अतो नार्थभेदः स्यात् । उत्तरस्मिन्नुभयत्रापि कर्तृव्यापारस्य धातुनैवाभिहितत्वान्न प्रत्ययाभिधेयत्वमभिप्रेतं सिध्यतीति । ‘कः प्रत्ययार्थः’ इति पर्यनुयोगस्य

---

१. धानात्—क, ग, घ, च. ङ.
२. नन्वस्ति तावत्—नास्ति क, ख.
३. विक्लिद्यन्ति तण्डुलान्—क, ख.
४. रक्तात्—च.
५. रूपा—च.
६. कर्तृत्व—च.
८. लक्षणः कर्तृलक्षणः—च.

**पचन्तीति[१] देवदत्तादयः । किं[२] पुनर्भवान्कर्तृलक्षणं[३] नत्वैवमाह– यदि साधननियोगादिकम् , कथं तण्डुलानां कर्तृत्वम् ? देवदत्तादय एव कर्तार इत्यविशेषप्रसङ्गः । अथागुणतो[४] धातुना अभिधीयमान-व्यापारता, क इदानीं प्रत्ययार्थः ? कर्तृव्यापारस्य भावनाया धातुनै[५]वाभिधानात् । फलधात्व[६]र्थार्थभावनानात्वा[७]द्धात्वर्थार्थो व्यापारो धातुवाच्यः, फलार्थस्तु धात्वर्थकरणकः प्रत्ययवाच्यः । नैतत्सारम् ।**

**नहि [८]धात्वर्थकरणफलभेद[९]प्रभावनः ।**
**[१०]धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा ॥ ११ ॥**

---

परिहारं शङ्कते– [११]फलधात्वर्थार्थभावनानात्वादित्यादिना । अयमर्थः–फलार्थस्य धात्वर्थार्थस्य च भावस्य भावनाया नानार्था( त्वा )त् भेदात् धात्वर्थार्थो यो व्यापारः स धातुवाच्यः, फलार्थस्तु व्यापारो धात्वर्थकरणः प्रत्ययवाच्य इति 'कः प्रत्ययार्थः' इति पर्यनुयोगस्य अनवकाश इति । एतद्दूषयितुमाह—नैतत्सारम्–नहि धात्वर्थकरण[१२]फलभेदप्रभावना(नः) । धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा ॥ ( इति )॥ व्यापार-भेदे प्रमाणं नास्तीत्यर्थः ।

---

१. इति—नास्ति—**क, ख**.
२. किं—नास्ति—**ग, घ, ङ**.
३. लक्षणत्वेऽपीति यदि—**क, ख**.
४. अगुणतया—**ग, घ**; तथा अगुणतया—**ङ**.
५. एव—नास्ति—**क, ङ**.
६. धात्वर्थभावनात्वात्—**क**.
७. धात्वर्थो व्यापारो—**क, ख**; धात्वर्थोऽर्थो व्यापारो—**ग**.
८. धात्वर्थकरणः—**क, ख, ग, घ, ङ**.
९. फलाभेद...**ङ**.
१०. 'धात्वर्थः....अन्तरा'—अयं कारिकाभागः उव्वेकवृत्तावेवोपलभ्यते मुद्रितपुस्तके ।
११. धात्वर्थार्थिभावनानात्वादिना—**च**.
१२. करणम्—**च**.

**योऽपि व्यवहितफलेषु दृश्यते, [१] सोऽपि धात्वर्थान्तरात्मकः प्रयत्नान्तरजन्मा, न प्राचीनधातुगोचरप्रभावनीय इति ।**

**कर्मणा च करोत्यर्थो व्याप्तोऽतस्तदयोगतः ।**
**तदभावः प्रत्ययार्थसाधनेऽपि विभक्तयः ॥ १२ ॥**

---

ननु व्यवहितफलेषु साङ्ग्रहण्या(हण्या)दिषु धात्वर्थं ग्रामप्राप्तिलक्षणं च फलमन्तरा सेवादिरन्यो व्यापारो दृश्यते, स एव प्रत्ययार्थो भविष्यतीत्याशङ्क्याह—योऽपि व्यवहितफलेष्वित्यादि । योऽपि तत्र सेवादिरन्यो व्यापारो दृश्यते, स सवे(सेवि)त्यादिधात्वन्तराभिधेयः[२] प्रयत्नान्तरजन्मा, न पुनः प्राचीनसाङ्ग्रहायण्या(हण्या)दिधात्वर्थप्रभावनीयः [३] 'साङ्ग्रहायण्या(हण्या) यजेत' इति यजतेः परस्य प्रत्ययस्याभिधेयः स्यात् । अतो धातूक्तव्यापारस्य कर्तृत्वे स्थित एव प्रय[illegible]ः[४] ।

इतश्च प्रत्ययाभिधेयस्य करोत्यर्थस्याभाव इत्याह—

कर्मणा च करोत्यर्थो व्याप्तोऽतस्तद्भावतः(दयोगतः) ।
तदभावः प्रत्ययार्थसाधने च विभक्तयः ॥ (इति) ॥

---

१. सोऽपि धात्वर्थान्तरात्मकप्रयत्नान्तरजन्मा न धातुगोचरप्रभावनीय इति—**क, ख.** सोऽपि हत्यादिधात्वर्थान्तरात्मको न प्रत्ययार्थः, प्रयत्नान्तरजन्मा न प्राचीनधातुगोचरप्रभावनीय इति—**ग, घ.**

२. अभिधेयप्रयत्नान्तर—**छ.**

३. 'यः'—अधिकं वर्तते—**छ.**

४. 'पर्यनुयोगः' इत्यतः परं 'कः प्रत्ययार्थ इति पर्यनुयोगस्यानवकाश इति । एतद्दूषयितुमाह—नैतत्सारम् ; नहि धात्वर्थेति,' इत्यधिकं दृश्यते—**च.**

5

**करोतेः [1] सदा [2] सकर्मकत्वात्तद्योगविरहेण करोत्यर्थाभावं प्रतीमः [3] ज्वलनविरहेणेव [4] धूमाभावम् । तथाहि—न जातु 'यजेत स्वर्गम्', 'शयीत स्वास्थ्यम्', 'आसीत सुखम्' इति दृष्टचरः ससर्गः ।**

**यदि मन्वीत सङ्गतिसमर्थविभक्तिभेदाभावादेवम् ।**

---

अयमर्थः—कर्मणा कारकेण करोत्यर्थो व्याप्तः कृशानुनेव धूमः । अतस्तदयोगतो व्यापकस्य कर्मणः अयोगतोऽसंबन्धात् तदभावः तस्य व्याप्तस्य करोत्यर्थस्याभावोऽवगम्यते अग्न्यभावेनेव धूमाभाव इति । प्रत्ययार्थसाधने च विभक्तयः इति व्यापकाभावहेतोरसिद्धिमाशङ्क्य परिहरति । कथमसिद्ध्याशङ्का ? उच्यते । सर्वत्र करोत्यर्थे भाव्यं विद्यत एव, यजेतेत्यादावपि भाव्यवाचिशब्दप्रयोगाभावः केवलम्, न भाव्याभावः । तदभावश्च प्रत्ययार्थसाधने विभक्त्यनुत्पादात् प्रत्ययार्थत्वाच्च करोत्यर्थस्येति । एवमाशङ्क्य परिहरति—प्रत्ययार्थसाधने विभक्तयो—भवन्त्येव । दृश्यन्ते हि प्रत्ययार्थभावनाकरणे तृतीयाविभक्तिरुद्भिदादिनामधेये । अतो भाव्याभावादेव तद्वाचिशब्दाप्रयोगः, न पुनः तत्समर्थशब्दाभावादिति न व्यापकाभावहेतोरसिद्धिरिति श्लोकस्यार्थः । अस्याविष्करणायाह—करोतीत्या(तेरित्या)दिना । अयमर्थः—करोत्यर्थस्य सदा सकर्मकत्वादिति कर्मणा करोत्यर्थस्य व्याप्तिं दर्शयति । तद्योगविरहेणेति— कर्मयोगविरहेणेति—व्यापकाभावहेत्वभिधानम् । करोत्यर्थस्येत्यादि व्याप्याभावसाध्याभिधानम् । ज्वलनेत्यादि दृष्टान्ताभिधानम् । तथाहीत्यादिना कर्मसंबन्धविरहं[5] करोत्यर्थस्य

---

१. सर्वदा—ङ. ३. वह्नि—ग, घ, ङ.
२. सकर्मकतया—क,—ख. सकर्तृकत्वात्—ङ ४. धूमाभावात्—क.
५. विरहः—च.

**तथाहि—धात्वर्थसाधनावगाहिन्यः[1] [2]सुब्विभक्तयः, [3]प्रत्ययार्थकर्मणि नियोज्ये स्वर्गकामादौ तददर्शनात् ।**

**तच्च वार्तम् ; एवं सति [4]शेषसंबन्धहेतोः षष्ठ्या अव्याहतप्रसरत्वात् । अपि च प्रत्ययार्थभावनाकरणधात्वर्थनामधेयेभ्यो विश्वजिदादिभ्यः[5] करणविभक्तिमीक्षमाणो [6]नेदम[7]ध्यवसातुमर्ह-**

---

दर्शयति । नहि स्वर्गं [8]यजेत (इ)त्यादिसंबन्धो दृष्टः ॥

प्रत्ययार्थेतिश्लोकैकदेशव्यावर्त्यामाशङ्कां दर्शयति—यदि मन्ये(न्वो)तेति । कर्मसंबन्धप्रतिपादनसमर्थद्वितीयादिविभक्त्यनाश्रवात्संबन्धाभावः, नाभावात्कर्मणः इति । द्वितीयाविभक्त्यभावे हेतुमाह — तथाहीत्यादिना । धात्वर्थसाधन एव द्वितीयादिविभक्तीनां सामर्थ्यम्, न प्रत्ययार्थसाधने, प्रत्ययार्थस्य कर्मणि नियोज्ये स्वर्गकामे तस्यादर्शनात् इति ।

एतन्निराकरोति—तच्चेति । द्वितीयाद्यप्रवृत्तौ षष्ठ्या भवितव्यं 'शेषे षष्ठी' इति, यत्र द्वितीयाद्यप्रवृत्तिस्स शेष इति । न च स्वर्गकामादौ षष्ठ्यपि दृश्यते । अतो भाव्याभावः, तदभावाच्च करोत्यर्थाभाव इति । अभ्युपगम्येदमुक्तम् । न च धात्वर्थसाधनैकगोचराः कारकविभक्तयः, प्रत्ययार्थभावनाकरणनामधेयेषु विश्वजिदादिषु तदभ्युपगमादित्याह[9]—अपि

---

१. गाहिनः—क ; ग्राहिण्यः—ख.
२. तद्विभक्ति—क. तद्विभक्तः—ख. तद्विभक्तयः—ङ.
३. प्रत्ययार्थनियोगकर्मणि—ग, घ, ङ.
४. शेषत्वे—ग, घ. शेष—नास्ति—ङ.
५. 'अपि'—अधिकं वर्तते—ख.
६. 'मध्यस्थः'—अधिकं वर्तते—क.
७. मप्यध्यव—ख.
८. यजते—च.
९. गमादिह—च.

**ति । अस्त्येव कर्मसंबन्धो 'यजेत स्वर्गकामः' इति चेत्-न; पुरुषविशेषणत्वेन(त्वात्) साक्षादसंबन्धात् । 'स्वर्गाय यजेत' इति साक्षात्सङ्गतिरिति चेत्-न ; अकर्मरूपत्वात्, कर्मरूपसंबन्धाभावस्य च [1] भावनाभिधानाभावहेतुत्वात् । अकर्मता**

---

चेत्यादिना । धात्वर्थसाधनविषया एव कारकविभक्तयो न प्रत्ययार्थविषया इत्यनैकान्तिकम् ; प्रत्ययाभिधेयभावनाकरणधात्वर्थनामधेयेभ्यो विश्वजिदादिशब्देभ्यस्तृतीयाविभक्तिदर्शनादिति । तत्र शङ्कते—अस्त्येवेत्यादिना । अस्त्येव कर्मसंबन्धः ; कर्मविभक्त्यभावेऽपि 'यजेत स्वर्गकामः' इति, काम्यमानस्य स्वर्गस्य कर्मत्वादिति चेत्, तन्निराकरोति—नेति । [2]हेतुमाह—पुरुषविशेषणत्वादिति । पुरुषविशेषणत्वात् स्वर्गस्य साक्षात्कर्मत्वेन संबन्धानुपपत्तेः । नहि विशेषणस्य पदार्थान्तरेण संबन्धो भवति, [3]राजपुरुषादावदर्शनादिति । पुनः शङ्कते—(स्वर्गायेति) । यद्यपि 'स्वर्गं यजते' इति सङ्गतिर्नोपपद्यते, तथापि 'स्वर्गाय यजेत' इति साक्षात्सङ्गतिरुपपद्यत एवेति । निराकरोति—नेति । हेतुमाह—अकर्मरूपत्वादिति । स्वर्गायेति चतुर्थीनिर्देशात्प्रतीयमानस्य संबन्धस्य कर्मरूपत्वं नास्ति । ततः किमित्यत आह—कर्मरूपसंबन्ध(न्धाभाव)स्येति । कर्मरूपो यस्संबन्धः तस्याभावः करोत्यर्थभावनाभिधानाभावे हेतुत्वेनोक्तः, अतः संबन्धान्तरं सदपि नोपयुज्यते इति । अकर्मरूपत्वं कुत इत्यपेक्षायामाह—अकर्मता चेति । स्वर्गायेति चतुर्थीनिर्देशान्न स्वर्गस्य कर्मता प्रतीयते । कर्मणि हि द्वितीया स्मर्यते न चतुर्थीति । स्वर्गस्य भावनया संबन्धमभ्युपगम्य तस्याकर्मरूपत्वादसत्समत्वमुक्तम् । इदा-

---

१. तद्भावनाभावकृतत्वात्—ङ.    २. हेतुमाह—नास्ति—च.

३. पुरुषाभाव —छ.

च चतुर्थीनिर्देशात् । 'स्वर्गाय यागः' इति च धात्वर्थेनापि [1]संबन्धात् ।

तुल्यार्थत्वं भावयति भवतीति [2] प्रसज्यते ।
कः प्रत्ययार्थो धातूक्तव्यापारे खलु कर्तरि ॥ १३ ॥

'भावयति घटं [3] कुम्भकारः', 'भवति घटम्' [4] इत्यपि प्रसज्येत, तुल्यार्थत्वात् । तथाहि–एकस्य(त्र) कर्तुः कुम्भकारस्य व्यापारं णिजाचष्टे, अन्यत्राख्यातप्रत्यय इति न भिद्यतेऽर्थः । प्रयोजकव्यापारो णिजर्थः, कर्तृव्यापार आख्यातार्थः इति नानार्थत्वं यो[5] मन्यते, वक्तव्यस्तेनेह कर्तृप्रयोजकभेदः । यदि साधनानां प्रवर्तयिता निवर्तयिता च कर्ता, स[6] चैकः कुम्भकार एवेति तद्व्या-

---

र्नी भावनया सह संबन्धमात्रमपि न सिध्यति, धात्वर्थसंबन्धेनापि 'यजेत स्वर्गाय' इति निर्देशोपपत्तेः, 'स्वर्गाय यागः' इत्युक्ते तथा प्रतीतेरित्याह— स्वर्गायेत्यादिना ॥

इतश्च कर्तृव्यापारात्मिका भावना नाख्यातप्रत्ययाभिधेया भवितुमर्हतीत्याह—

तुल्यार्थत्वं भावयति भवतीति प्रसज्यते ।
कः प्रत्ययार्थो धातूक्तव्यापारे खलु कर्तरि ॥ (इति) ॥

'भावयति घटं कुम्भकारः' इत्यत्र यादृशस्संसर्गावगमः, 'भवति घटः' इत्यत्रापि तादृशः प्रसज्येत । न तथा अस्ति ; भवतीत्यत्र घटस्य कर्मत्वेन संसर्गानवगमात्, भावयतीत्यत्र च तथावगमात् । कथन्तर्हि उभयत्र तुल्यार्थत्वप्रसङ्गः ? उच्यते–उभ-

---

१. संबन्धनात्—क, ग, घ, ङ.
२. प्रयुज्यते—क, ख.
३. 'कुम्भकारः' इत्यादिः 'कर्तुः' इत्यन्तः ग्रन्थो नास्ति ङ. मातृकायाम् ।
४. घट इत्यपि—क. ख.
५. योऽपि—क, ग, घ, ङ.
६. एवैकः—ङ.

**पाराभिधानात्तुल्यार्थत्वम् । घटः कर्ता, प्रयोजकः कुम्भकारः इति चेत्-कथमनीशितुः साधनप्रवृत्तिनिवृत्त्योर्घटस्य कर्तृत्वं तादृशं कुलालमतिक्रम्य। अथागुणतो धातुना अभिधीयमान[१]व्यापारत्वम्-कस्तर्हि इदानीमाख्यातार्थः? धातुना अभिहितत्वात्तद्व्यापारस्य । नच व्यापारभेददर्शनम्, [२]येन धातुप्रत्यययो[३]र्विषयविभागः स्यात् ।**

---

यत्रापि कर्तृव्यापारवाचिनौ शब्दौ यतो भवतः–भावयतीत्यत्र कर्तृव्यापारं णिजाचष्टे, भवतीत्यत्राख्यातप्रत्ययः इति, धात्वर्थ[४]श्चोभयत्राप्येक एव । अतः प्रसज्यत एव तुल्यार्थत्वम्। अथोच्येत–प्रयोजकव्यापारं णिजाचष्टे, आख्यातप्रत्ययस्तु कर्तृव्यापारम्, अतोऽर्थभेदाद्बुद्धिभेदोऽप्युपपन्न इति । कस्तर्हि कर्ता, को वा प्रयोजक इति तयोर्विविच्य लक्षणं वाच्यम्। यदि साधनानां नियोक्ता कर्ता, [५]स तर्हि कुलाल एव न घट इति उभयत्रापि तद्व्यापाराभिधानाद्दुर्वारं तुल्यार्थत्वम् । अथागुणतो धातुना अभिधीयमानव्यापारत्वं कर्तृलक्षणमिति घटः कर्ता, कुलालः प्रयोजकः इति तद्व्यापारवाचिनोश्शब्दयोर्न तुल्यार्थत्वप्रसङ्ग इति । कस्तर्हि इदानीं प्रत्ययार्थः? कर्तृव्यापारस्य धातुनैवाभिहितत्वात् । न च व्यापारभेदे प्रमाणमस्ति, येन प्रकृतिप्रत्यययोः [६]विषयविभागः स्यादिति। तदेतदाह–भावयतीत्यादिना विषयविभागः स्यादित्यन्तेन। अत्राक्षरयोजना नातीव दुर्ज्ञाना।

---

१. व्यापार इति, किं तर्हीदानीं प्रत्ययार्थः? धात्वभिहितत्वाच्चद्व्यापारस्य–क. ख.

२. यतो–क, ख, ग, घ.

३. 'विषय'—नास्ति—ग, घ.

४. श्चाप्युभयत्रा–छ.

५. तर्हि स—च.

६. विषय—नास्ति—छ.

करणत्वं च शब्दतोऽन्यतो [1]वा धात्वर्थस्योभयत्राप्यविशिष्टमिति दुर्वारं तुल्यार्थत्वम्। अतो न प्रत्ययो भावनावचन इति सूक्तम्—'ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते' इति[2] ॥

किञ्च–

कर्तृव्यापार [3] इष्टश्चेत् [4]पच्यादावपि भावना।
धात्वर्थान्तररूपः स्यात्सोऽप्यधिश्रयणादिकः ॥ १४ ॥

---

ननु करणभेदात्कर्तृव्यापारस्य भेदो भविष्यति। तथाहि–भावयतीत्यत्र णिज्वाच्यस्य कर्तृव्यापारस्य धात्वर्थः (क)रणम्; भवतीत्यत्राख्यातवाच्यस्य तु धात्वर्थ[5]व्यतिरिक्तः। अतः करणभेदाद्व्यापारभेद इत्याशङ्क्याह–करणत्वं चेति। अयमर्थः–शब्दतः शब्दस्वभावात् धातोः प्रत्ययार्थकरणे समर्थत्वात्, अन्यतो वस्तुस्वभावा[6]द्धात्वर्थस्यान्योत्पादस्वभावत्वात् धात्वर्थस्य यत्करणत्वं तदुभयत्राविशिष्टम्; अतो दुर्वारं तुल्यार्थत्वम्। अतः प्रत्ययो न भावनावचन इति सुष्ठूक्तं भट्टपादैः–'ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते' इति। अस्यायमर्थः–भवतीत्यस्मिन्पदे केनांशेन प्रकृत्यंशेन प्रत्ययांशेन वा ण्यन्तस्य भवतेः भावनाशब्दस्यार्थो भावना अभिधीयत इति। एवमकर्मकेषु भवत्यादिष्वाख्यातप्रत्ययस्य भावनावचनत्वं निरस्येदानीं सकर्मकेषु पच्यादिष्वपि तन्निरासायाह–किञ्च–

---

१. वा—नास्ति—**ख**.
२. इति—नास्ति—**क, ग, घ**.
३. इष्टश्च—**ग, घ, ङ**.
४. पच्यादौ यदि—**ग, घ, ङ**.
५. व्यतिरिक्तिम्—**छ**.
६. धात्वर्थस्यान्योत्पादस्वभावत्वात्—नास्ति—**च**.

**यदि [1]च कर्तृव्यापारो भावना; स च पच्यादिष्वधिश्रयणादिकः, तं पचिरेवोपादत्ते, अन्यथा सिध्यतिविक्लिद्यतिभ्यामविशेषः स्यात् ।**

---

कर्तृव्यापार इष्टश्च( श्चेत् ) पच्यादिष्वपि भावना ।
धात्वर्थान्तररूपस्स्यात्सोऽप्यधिश्रयणादिकः ॥ (इति) ॥

यदि कर्तृव्यापारो भावनेष्यते, स तु निरूप्यमाणः पच्यादावधिश्रयणादिक एव, नान्यः, स च पच्यादेर्धातोरेवार्थ इति न धात्वर्थादन्यः भावनापदार्थः सिध्यतीत्यभिप्रायः । अत्र व्यवहितसंबन्धादिना वैषम्यादक्षरानुलोम्यं प्रदर्श्यते । यदि भावना कर्तृव्यापार इष्टः, स तु पच्यादावधिश्रयणादिक इति व्यवहितेन संबन्धः । भवतु कर्तृव्यापारोऽधिश्रयणादिकः, किमतः? इति चेत्—तत्राह—धात्वर्थान्तररूपः स्यादिति । धातोरेवार्थान्तररूपः स्यात् विक्लित्तिलक्षणादर्थात् । एतदुक्तं भवति–पचिरेव विक्लित्तिमात्रातिरेकेण तत्पर्यन्तं अधिश्रयणादिकं कर्तृव्यापारमप्युपादत्ते । ततश्च तदर्थातिरेकेण कर्तृव्यापारो भावना प्रत्ययार्थो न सिध्यतीत्यर्थः । अथवा—धात्वर्थान्तररूपः स्यात् [2]धात्वन्तराणां अधिश्रयत्यादीनां योऽर्थोऽधिश्रयणादिकः कर्तृव्यापारोऽर्थः, स एव स्यात्। पच्यर्थातिरिक्तोऽपि धात्वर्थ[3]मात्रान्नातिरिच्यत इत्यर्थः। एतदेव विवृणोति—यदि चेत्यादिना । अयमर्थः—कर्तृव्यापारश्चेद्भावना, स तु पच्यादेरधिश्रयणादिकादन्यो नास्ति, अनुपलब्धेः। स एव तर्हि प्रत्ययार्थो भवती(त्वि)त्याशङ्क्याह—तं पचिरिति । पचिरेव धातुस्तं कर्तृव्यापारं उपादत्ते, न प्रत्ययः । कुत इति चेत्, तत्राह—अन्यथेति । यदि

---

१. ' च ' नास्ति—ख.   २. धात्वर्थान्तराणां—च.
३. मात्रातिरिक्तान्ना—च.

**अथापि नोपाददीत, तथाप्याधिश्रयत्यादिधात्वन्तरार्थ[1] इति नान्यो धात्वर्थाद्भावनापदार्थः । अथ मतं—करोतीत्यन्विता[2]भास-प्रत्ययविषयतया अनुवृत्तात्मा [3]व्यावृत्तावग्रहग्रहणगोचरेभ्यो**

---

पचिरधिश्रयणादिकः (कं) कर्तृव्यापारं नोपाददीत विक्लित्तिमात्रमेवाचक्षीत, तथा-सति सिध्यति[4]विक्लित्यतिभ्यामस्य नार्थभेदः स्यात् । स चास्ति ।

इदानीं अधिश्रयणादेः [5]पचत्यनभिधेयत्वमभ्युपगम्य दूषणमाह—अथापीति। पचत्यनभि-धेयत्वेऽप्यधिश्रयणादेरधिश्रयत्यादिधात्वन्तराभिधेयत्वाद्धात्वर्थमात्रान्न भेदेन भावनापदार्थस्सि-ध्यतीत्यभिप्रायः। इदानीं प्रकारान्तरेण भावनासमर्थनं शङ्कते—अथ मतमित्यादिना। अयमभि-प्रायः—पचति पठतीत्यत्र सर्वत्र करोतीत्यनुवृत्ताकारा बुद्धिरुत्पद्यते, अतः तद्विषयेणानु-वृत्ताकारेण भवितव्यम्, पाकपाठादयस्तु [6]धात्वर्था व्यावृत्ताकारया बुद्ध्या गृह्यन्ते । अत-स्ते व्यावृत्तस्वभावाः, प्रतीत्यनुरूपत्वात् विषयस्य । ततश्च व्यावृत्तस्वभावेभ्यो धात्वर्थेभ्योऽनुवृत्तात्मा करोत्यर्थोऽन्यो भावना सर्वधातुष्वनुवर्तमानस्याख्यातप्रत्ययस्यार्थ इति ।

अत्रैवा अक्षरयोजना । करोतीति योऽन्विताभासोऽनुवृत्ताकारः प्रत्ययः, तस्य विषयतया विषयभावेन अनुवृत्तात्मा अनुवृत्तस्वभावः[7] भावनापदार्थः धात्वर्थेभ्योऽन्यो भवितुमर्हतीति संबन्धः। किंविशिष्टेभ्यो धात्वर्थेभ्यः इत्यपेक्षायामुक्तम्—व्यावृत्तावग्रहग्रहणगो-

---

१. धात्वन्तरार्थात्मक—क, ख.
२. अन्विताभासस्य प्रत्ययस्य विषय-तया—ग, घ, ङ.
३. व्यावृत्तावग्रहणगोचरेभ्यो—ग, घ; व्यावृत्ताकारग्रहग्रहणेभ्यः—ङ.
४. विक्लित्तिभ्या—च.
५. पचत्यभि—च.
६. धात्वर्थव्यावृत्ता—छ.
७. स्वरूपो—छ.

**धात्वर्थेभ्योऽन्यो भावनापदार्थ इति—तदसत् । एवं [1]हि सामान्यलक्षणानुपातितया धात्वर्थसामान्यमेव[2] स्यात्, न पदार्थान्तरं भावनापदार्थः ।**

**अथ[3]मतं—सत्यं साध्यतया सामान्यम्, न गोत्वादिवत्तद्रूपतया। त-**

---

चरेभ्य इति । हेतुगर्भं विशेषणम् । व्यावृत्ता अवग्रहा आकारा येषां ग्रहणानां विज्ञानानां तानि व्यावृत्तावग्रहग्रहणानि, तेषां गोचराः विषयाः व्यावृत्तावग्रहग्रहणगोचराः धात्वर्थाः, तत एव तेभ्योऽन्योऽनुवृत्तात्मा करोत्यर्थः इति । एतन्निराकरोति—तदसदिति । यदि व्यावृत्तेषु धात्वर्थेष्वनुवर्तमानतया अन्यत्वं करोत्यर्थस्य, तदा तत्त्वान्तरत्वं न सिध्यति, किन्तु धात्वर्थसामान्यमेव करोत्यर्थस्स्यात्सामान्यलक्षणानुपातितया[4]। एतद्धि [5] सामान्यस्य लक्षणम्, यदेकस्यानेकेषु प्रत्येकं कार्त्स्न्येनानुवृत्तिः । अनल्पलक्षणानुपातितया धात्वर्थसामान्यान्नान्यो भावनापदार्थस्सिध्यति । धात्वर्थसामा[6]न्यत्वन्त्वस्माभिरपीष्यत एवेत्यभिप्रायः ।

तत्र शङ्कते—अथ मतमिति । अयमाशयः—करोत्यर्थस्य सकलधात्वर्थानुयायित्वे सत्यपि न तस्य गोत्वादिवत्तद्रूपतया तत्समवायितया तदनुयायिता, किन्तु तत्साध्यतया । तथाहि—धात्वर्थविशेषसाध्याः भावनाविशेषाः, तेषां करणत्वात् । अतः करोत्यर्थस्य धात्वर्थविशेषानुगमः, धात्वर्थविशेषसाध्यत्वात्, न पुनः स्वयं धात्वर्थसमवायि सामान्यमिति । गोत्वादिवदिति वैधर्म्यदृष्टान्तः । कथं पुनरिदमवगम्यते करोत्यर्थो धात्वर्थसाध्यतया

---

१. हि—नास्ति—ङ.
२. सामान्यरूपमेव—क, ख ; सामान्यरूप एव—ग, घ ; सामान्य एव—ङ.
३. मतं साध्यतया तत्सामान्यं—ख.
४. पातिततया—छ.
५. सामान्यलक्षणं —च.
६. सामान्यत्व—च.

**स्याः प्रतिपुरुषं[1] शीघ्रं करोति, मन्दं करोतीति स्वसामान्यविशेषाभ्यां योगात्। धात्वर्थवर्ति तु करणरूपं [2] सामान्यमन्यदेव। उक्तं [3]हि—**

---

तत्रानुवर्तते, न गोत्वादिवत् तत्समवायितया? इत्याशङ्कयाह—तस्या इति। तस्याः करोत्यर्थात्मिकाया भावनायाः स्वसामान्यविशेषाभ्यां योगात् । स्वशब्देन भावनोच्यते। स्वसामान्यं विशेषश्च स्वसामान्यविशेषौ । करोतीत्येतद्रूपं सामान्यम्, 'शीघ्रं करोति,' 'मन्दं करोति' इति विशेषः, ताभ्यां योगात् संबन्धात् । एतदुक्तं भवति—करोत्यभिधेयं यद्वस्तु, तस्य साध्यस्वभावानुवृत्तव्यावृत्ताकारयोगात्[4] सामान्यविशेषात्मकं वस्त्वन्तरमेतन्न धात्वर्थे सामान्यात्मना अनुप्रवेशमर्हति—इति। अथवा — स्वसामान्यविशेषाभ्यां— इत्यादेरयमर्थः—सामान्यात्मकौ विशेषौ[5] ताभ्यां योगाच्छीघ्रं करोति मन्दं करोतीति। तथाहि—शैघ्र्यमान्द्याभ्यां साध्यस्वभावाभ्यां विशेषणाभ्यां विशेषितौ साध्यस्वभावौ करोत्यर्थस्यावान्तरसामान्यरूपौ गम्येते। अतः ताभ्यां योगादेकार्थसमवायान्न करोत्यर्थो धात्वर्थसामान्यमात्रम्, किन्तु साध्यस्वभावं तत्त्वान्तरम् इति ।

ननु धात्वर्थसामान्यमेव साध्यस्वभावमस्त्वित्याशङ्कयाह—धात्वर्थवर्तीति । धात्वर्थसमवायि यत् सामान्यं तत्सिद्धस्वभावम्, करणरूपत्वादिति । उक्तञ्चैतदभियुक्तैरित्याह—उक्तं हीति ।

---

१. पुरुषं—नास्ति—ख.

२. करणसामान्य—क, ग, घ.

३. उक्तं च—ग, घ, ङ,

४. कारायोगात्—च.

५. विशेषात्मकौ सामान्यविशेषौ ताभ्यां—छ

'अन्यदेव हि [१]धात्वर्थसामान्यं[२] करणात्मकम् ।
अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥' इति[३] ॥

तदेतदपेशलम् । तथाहि—

न क्रियाकरणाकारे द्वे ज्ञाने अनुयायिनी ।
यतः प्रतीमः सामान्ये द्वे साध्यसमवायिनी ॥ १९ ॥

---

एवं परमतमाशङ्क्य तन्निराकरणायाह—तदेतदपेशलम् । तथाहि—

न क्रियाकरणाकारे द्वे ज्ञाने अनुयायिनी ।
यतः प्रतीमः सामान्ये द्वे साध्यसमवायिनी ॥ (इति) ॥

यदि क्रियासामान्याकारं करणसामान्याकारं च ज्ञानद्वयं प्रतीयेत, तदा धात्वर्थसामान्यविशेषातिरेकेणान्यः [४]करोत्यर्थः सामान्यविशेषात्मा सिध्यति । न चेह सामान्यद्वयप्रतीतिरस्ति, येन धात्वर्थसाध्यक्रियाव्यक्तिसमवाय्येकं साध्यं सामान्यम्, अन्यच्च धात्वर्थसमवायि सिद्धरूपं [न?] प्रतीम इति श्लोकस्य तात्पर्यार्थः ।

अत्रैषा अक्षरयोजना । न क्रियाकरणाकारे क्रियाकारं करणाकारं च द्वे ज्ञाने अनुयायिनी अनुवर्तमाने व्यावर्तमानेषु विशेषेषु न स्तः, यतो ज्ञानद्वयादनुवृत्ताकाराद्वे सामान्ये प्रतीमः । साध्यसमवायिनी साध्यं, समवायि च धात्वर्थेन, साध्यम् करोत्यर्थसामान्यं धात्वर्थसमवायि चान्यदिति । एतदेव विवृणोति—न( हि ) करणमिति । पचत्यादिषु कारकव्यतिरेकेण तत्साध्यक्रियाव्यतिरेकेण च करणं करण-

---

१. यागादि—ङ.
२. सामान्यकरणा—ग, घ.
३. 'इति' नास्ति—क, ग, घ, ङ.
४. करोत्यर्थसामान्य—च.

**नहि करणं करणमिति [1] क्रियाकारकव्यति[2]रिक्तेऽर्थे पच्यादिषु प्रत्ययः, यतः क्रिया[3]रूपव्यतिरिक्तं करणात्मकं धात्वर्थसामान्यं[4] कल्प्येत । शीघ्रमन्दादिषु[5] तु धात्वर्थसामान्यस्यैव करोति-वाच्यस्यावान्तर[6]सामान्यभेदः शोणकर्कादिरिवाश्वत्वस्य[7] ।**

---

मिति अनुवृत्ताकारः[8] प्रत्ययो नास्ति, काष्ठादिष्वेव एवंरूपः प्रत्ययः। अतः क्रिया-रूपातिरिक्ते करणात्मके धात्वर्थसामान्ये प्रमाणं नास्ति । अतः क्रियारूपमेव धात्वर्थ-सामान्यं न करणरूपम् ।

यदुक्तं 'शीघ्रं करोति' 'मन्दं करोति' इति सामान्यविशेषान्तरयोग इति, तत्राह—शीघ्रमन्दादिष्विति । 'शीघ्रं करोति', 'मन्दं करोति' इति तु धात्वर्थ-सामान्यस्यैव करोतिवाच्यस्यावान्तरसामान्यभेदः प्रतीयते शोणकर्कादिरिवाश्व(त्व)स्य । नहि तत्राश्व(त्व)सामान्यानाक्रान्तव्यक्त्यन्तरसमवायि सामान्यान्तरं शोणत्वादिरूपं उपेयते, प्रतीयते वा । किन्तु अश्वत्वसामान्याधारभूतास्वेव कासुचिद्व्यक्तिषु व्यक्त्यन्तरपरिहारेण वर्तमानम-वान्तरसामान्यमेव ।[9] एवमत्रापि शीघ्रमन्दादिषु करोत्यर्थस्य धात्वर्थसामान्यस्यावान्तर-सामान्यभेद इति । यथा च धात्वर्थातिरिक्तस्तत्करणको व्यापारो नास्ति, तथा पूर्वमेवोक्तमित्याह—उक्तं चेति(च—)न हीत्यादिना ।

---

१. इति पच्यादिषु क्रिया—**क, ख.**
२. व्यतिरेकोऽन्वेति पच्यादिषु—**क**;व्यति-रिक्तोऽन्वेति—**ख.**
३. 'रूप'—नास्ति—**क, ख.**
४. सामान्यमन्यत्—**क, ख.**
५. मन्त्रादिषु—**क**; मन्दादिश्च—**ग,घ,ङ**
६. 'सामान्य' नास्ति **क, ख.**
७. अश्वस्य—**क, ख.**
८. कारप्रत्ययो—**च.**
९. मेव तत्रापि—**च.**

**उक्तं च—**

**'न हि धात्वर्थकरणः फलभेदप्रभावनः ।**
**धात्वर्थं फलभेदं च व्यापारो दृश्यतेऽन्तरा[1] ॥' (इति)॥**

**वाच्यो लक्षणभेदश्च[2] ननु धात्वर्थभावयोः[3] ।**
**भावः परिस्पन्द इति यजत्यादावसम्भवः ॥ १६ ॥**

---

एवं धात्वर्थसामान्यविशेषपरिहारेण भावनाख्योऽन्यः पदार्थो न, अस्य शब्दार्थत्वं दूरापेतमिति प्रतिपादितमतीतानन्तरग्रन्थेन । इदानीं पुनरपि धात्वर्थभावनयोर्भेदासंभवं तयोर्लक्षणभेदासंभवेन प्रतिपादयितुमाह—

वाच्यो लक्षणभेदश्च ननु धात्वर्थभावयोः । भावः परिस्पन्द इति यजत्यादावसंभवः ॥ (इति)॥

[4]धात्वर्थभावयोर्भेदं वदता भेदेन लक्षणं वाच्यम्, संमुग्धस्य हि वस्तुनो लक्षणानुग्रहाद्भेदावधारणमिति । यदि तावत्परिस्पन्दात्मा व्यापारो भावः, अस्पन्दात्मको धात्वर्थः, इति तयोर्लक्षणभेद आश्रीयते, तदा यजत्यादावाख्यातार्थस्य परिस्पन्दरूपत्वाभावाद्भावनात्वाभावप्रसङ्गः इति श्लोकस्यार्थः ।

अस्यार्थस्य स्पष्टीकरणायाह—अवश्यमिति । लक्षणभेदं शङ्कते—अस्पन्दात्मा धात्वर्थ इति । एतन्निराकरोति—अस्पन्दमानकर्तृकेष्विति । यजते, जानाति, इत्यादिष्वाख्यातार्थेषु, भावना(त्वा)भावः प्रसज्येत, तेषां परिस्पन्दरूपत्वाभावात् । तत्रैव

---

१. अन्तरे—क, ख.
२. तत्र—ग. घ, ङ.
३. भेदयोः—क, ख.
४. वाक्यार्थभावयोर्भेदं वदता भेदलक्षणं वाच्यम्, समुग्धस्य—च.

**अवश्यं च [१]भावधात्वर्थभेदवादिना तयोः स्पष्टो रूपभेदो[२] दर्शयितव्यः । अस्पन्दात्मा धात्वर्थः, स्पन्दात्मको भाव इति चेत्, [३]अस्पन्दमान[४]कर्तृकेषु 'यजते' 'जानाति' [५]इत्याख्यातार्थेषु तदभावप्रसङ्गः । [६]गच्छत्यादौ च धात्वर्थस्य भावनात्वप्रसङ्गः । चेतनव्यापारस्तु पुरस्तात्प्रत्युक्तः ।**

---

दूषणान्तरमाह—गच्छत्यादौ चेति । गच्छति पठतीत्यादौ धात्वर्थस्य परिस्पन्दरूपत्वात् [७]भावनात्वं प्रसज्येत । ननु [८]तत्रापि धात्वर्थस्य स्पन्दरूपता नास्ति, स तु संयोगविभागमात्ररूपः, परिस्पन्दस्तु तद्धेतुभूतोऽन्य[त] एव, यत्र '[९]चलति' इति प्रत्ययः तत्र कथं धात्वर्थस्य गच्छत्यादौ स्पन्दरूपतेति ? अत्रोच्यते—चलतीति प्रत्ययस्य संयोगविभागमात्रमालम्बनम् नार्थान्तरम्, प्रमाणाभावादिति वक्ष्यमाणनीत्या अङ्गीकृत्योत्तरमित्यनवद्यम् । एवं स्पन्दात्मकत्वस्य भावनालक्षणस्यात्मकर्तृकेषु सत्यामपि तस्यामभावात्, गच्छत्यादौ च धात्वर्थेऽभावनात्मन्यपि भावात्, अव्याप्तिः अतिव्याप्तिश्चोक्ता । इदानीमेतद्दोषपरिहाराय प्रयत्नश्चेतनव्यापारो भावना अस्त्वित्याशङ्कयाह—चेतनव्यापार इति ।

परिस्पन्दमभ्युपेत्य तस्य भावनात्वे दूषणमुक्तम्; इदानीं तदेव निरूपणीयमित्याह—कश्चैष

---

१. भावना—**ग, घ.**
२. भेदः प्रदर्श—**क, ख.**
३. एवं अस्प **ग, घ, ङ.**
४. मानात्मकर्तृ—**क, ख.**
५. इत्याख्यातेषु—**क, ख.**
६. गच्छतीत्यादिषु च—**क, ख.**
७. भावना अर्थः—**च.**
८. तत्रापि च स्पन्दरूपता अस्ति—**च.**
९. चलतित्वप्रत्ययः—**च.**

**कश्चैष परिस्पन्दः? न खल्वयमाश्रयाभिमताद्भेदेन गम्यते । कथं न गम्यते? यदा सत्यप्याश्रये प्रत्यक्षे कदाचिच्चलतीति १प्रत्ययप्रादुर्भावः, २(अतः) तदतिरिक्ता३र्थालम्बनः ।**

---

इति। क इति क्षेपाभिप्रायेण। ननुप्रसिद्धोऽयं परिस्पन्दः, यत्रायं चलतीति प्रत्ययः । तत्र कथमस्याक्षेप इत्याशङ्क्याह—न खल्विति । परिस्पन्दाश्रयत्वाभिमतो यो देवदत्तादिः, तस्माद्भेदेनायं परिस्पन्दो न गम्यते । देवदत्तादिरेव हि चलतीति प्रतीयते, नार्थान्तरम् । अर्थान्तरत्वे तदप्रतीतावपि प्रतीतिप्रसङ्गादिति । तत्र चोदयति—कथं न गम्यत इति । आश्रयाद्भेदेन परिस्पन्दः कथं न ४ गम्यते, गम्यत एवेत्यर्थः । तत्र हेतुमाह—यदेति । आश्रये देवदत्तादौ प्रत्यक्षे सत्यपि कदाचिदेव चलतीतिप्रत्ययः प्रादुर्भवति न सर्वदा । यद्याश्रयमात्रालम्बनोऽयं५ स्यात, प्रत्यक्षे तस्मिन्सर्वदा प्रादुर्भवेत् । न च प्रादुर्भवति । अतस्तदतिरिक्तार्थालम्बन इति । अनेन परिस्पन्दसद्भावेऽनुमानमुक्तम् । अत्रैवं प्रयोगः—फ( च )लतीतिप्रत्ययो धर्मित्वेनोपादीयते । देवदत्तादाश्रया(द)तिरिक्तमर्थान्तरमवलम्बते इति साध्यो धर्मः । तस्मिन्सत्यपि प्रत्यक्षे कदाचिदेवोत्पद्यमानत्वात्—यथा दण्डदेवदत्तयोः प्रत्यक्षयोरपि कदाचिदेवोत्पद्यमानो दण्डीति प्रत्ययः तदतिरिक्तविशिष्टालम्बनः, तद्वदिति । अर्थापत्तिर्वा अनेनोपन्यस्ता । आश्रयप्रत्यक्षे सत्यपि कदाचिदेव ६प्रादुर्भवन् चलतीति प्रत्ययोऽन्यथा नोपपद्यते, यद्याश्रयव्यतिरिक्तम७स्यालम्बनं न स्यादिति ।

---

१. प्रत्ययः प्रादुर्भवन्—ग, घ, ङ.
२. ' अतः' नास्ति—क, ख, ग, घ, ङ.
३. रिक्तमर्थमालम्बते—क, ख, ग, ङ.
४. गम्यत इति—च.
५. म्बनो यत्—च.
६. प्रादुर्भाव :—च
७. मन्यालं—च.

**नैतत्सारम्—**

**कार्यं विभागसंयोगलक्षणं चलतीति धीः ।**
**[1]आलम्बतां ततो नान्यो विशेषो गम्यते[2]स्थितात् ॥ १७ ॥**

**स खलु परिस्पन्दोऽक्षगोचरः पूर्वोत्तरदेश[3]विभागसंयोगफलो-**

---

एतद्दूषयितुमाह—नैतत्सारम्—

कार्यं विभागसंयोगलक्षणं चलतीति धीः ।
आलम्बते(तां) ततो नान्यो विशेषो गम्यते स्थितात् ॥ (इति) ॥

अयमर्थः—भवत्वाश्रयव्यतिरिक्तमालम्बनं चलतिप्रत्ययस्य, तथापि न पूर्वोत्तरदेशविभागसंयोगातिरिक्तं किञ्चिदस्ति तद्धेतुभूतं परिस्पन्दाख्यं वस्तु । किन्त(न्तु त)त्कार्यत्वाभिमतौ देशसंयोगविभागौ चलतीति प्रत्ययो गोचरयति । न च स्थितादस्थितस्य विशेषः ततोऽन्य उपलभ्यत इति श्लोकस्यार्थः ।

एतमेवार्थं स्पष्टीकरोति—स खल्वित्यादिना । स खलु परिस्पन्दोऽक्षगोचरोऽभ्युपगम्यमानः पूर्वोत्तरदेशविभागसंयोगफलोऽभ्युपगम्यते परिस्पन्दवादिना । तथा च सति तावेव संयोगविभागौ उभयवादिसंप्रतिपन्नौ विषयीकरोत्ये(त्वे)ष चलतिप्रत्ययः, न तद्धेतुत्वेनाभिमतं परिस्पन्दाख्यमर्थान्तरम् , एकतरवाद्यसिद्धेः । ननु न वस्तु सत्तामात्रेण प्रतीतेर्विषयभावं प्रतिपद्यते, किन्तु तदनुविद्धतया । न (च) चलतीतिप्रत्यये संयोगविभागयोरनुवेधोऽस्ति । तत्र कथं तद्विषयभावः इत्याशङ्क्याह—न खल्विति । अयमर्थः—पूर्वोत्तरदेशविभागसंयोगावप्रतिपद्यमानः पुरुषश्चलतीति न प्रतिपद्यते, किन्तु

---

१. आलम्बते—क, ख.
२. लक्ष्यते—क, ख, ग, घ, ङ.
३. देशसंयोगविभागफलः—ग, घ; संयोगफल—ङ

**ऽभ्युपगम्यते[1]। तथा च तावेव[2]गोचरयत्वेष प्रत्ययः। न खलु पूर्वो-[3]त्तरदेशहानोपादाने अप्रतिपद्यमानश्चलतीति बुध्यते। न च स्थिता-न्निपुणतोऽपि निरूपयद्भिरन्यो विशेषः[4]चलतीति लक्ष्यते[5]।**

**ननु[6]चलित्वा स्थितोऽपि संयोगविभागवानेव[7], न चलतीति**

---

प्रतिपद्यमान एवेति। यदि पुनः संयोगविभागौ न चलतीतिप्रत्ययस्य विषयौ स्याताम्, तदा तदप्रतिपत्तावपि चलतीतिप्रत्ययः उदी(दि)यात्। न चोदेति। तस्मादव-गम्यते पूर्वोत्तरदेशविभागसंयोगविषयः चलतीतिप्रत्ययः इत्यक्षरचतुष्टयाधिकस्य श्लोक-पूर्वार्धस्यार्थः।

ननु संयोगविभागयोः चलतीतिप्रतीतौ प्रतीतिः चलत्यर्थव्यतिरिक्तयोरपि सतोः तत्साहचर्यनियमादुपपद्यते। [8]अतश्चलतिप्रत्ययविषयस्ताभ्यामन्य एवेत्याशङ्क्य उत्तरतया वि(अव)शिष्टश्लोकैकदेशं व्याचष्टे—न च स्थितादिति। अस्ति तावत्स्थिता[9]दस्थितस्य कश्चिद्विशेषः। स च पर्यालोच्यमानः संयोगविभागाभ्यामन्यो[10] न गम्यते। व्यतिरेके निश्चिते तत्साहचर्यात्तत्प्रतीतौ प्रतीतिरिति वक्तुं वा शक्येत। न च व्यतिरेको निश्चितः, [11]प्रमाणाभावादिति।

इदानीं चलतिप्रत्ययस्य संयोगविभागमात्रालम्बनत्वपक्षेऽतिप्रसङ्गं चोदयति—ननु चलित्वा स्थितोऽपीति। अयमर्थः—चलित्वा स्थितोऽपि देवदत्तः पूर्वोत्तरदेशविभागसंयोग-

---

१. अभ्युपेयते—ख, ख, ग, ङ.
२. गोचरयत्येष—क, ख.
३. पूर्वोत्तरदेशापादानो—ङ.
४. न्यो व्यापारः—ग, घ, ङ.
५. लभ्यते—क.
६. चलत्वात्—ग, घ, ङ.
७. 'एव' नास्ति—ग, घ, ङ.
८. अतश्चलतिः—छ.
९. दितिः। तस्य—च.
१०. न्योऽत्र—छ
११. प्रमाणभावादिति—च.

**गम्यते। अन्यतरकर्मजन्मनोश्च संयोगविभागयोर्द्विष्ठत्वेनोभयत्र[1]-क्रियाप्रत्ययप्रसङ्गः। स्थाणुश्येनयोर्विभागमात्रम्, एकत्र समुदितयो-स्तद्धेतुत्वमिति चेत्—अन्यतरकर्मजन्मनोरुभयोरपि[2] प्रसङ्गः; यदा स्थाणुरेकेन श्येनेन संयुज्यतेऽ[3]न्यतश्च वियुज्यते। न च क्रमविशेष-**

---

वानेवेति चलतीति प्रतीयेत। न च प्रतीयते। किञ्च, यत्रान्यतरकर्मजन्मानौ संयोगविभागौ, यथा स्थाणुश्येनयोः, तत्र स्थाणौ श्येने चोभयत्रापि चलतीतिप्रत्ययप्रसङ्गः। न हि स्थाणुश्चलतीति प्रतीयते, किन्तु श्येन एवेति। तदेतदाह—अन्यतरकर्मजन्मनोरित्यादिना। तत्र शङ्कते—स्थाणुश्येनयोरित्यादिना। अयमभिप्रायः—संयोगविभागमात्रालम्बनत्वेऽपि चलतिप्रत्ययस्य न स्थाणौ प्रसङ्गः, संयोगविभागयोः समुदितयोस्तत्राभावात्, विभागमात्रस्यैव भावात्। तथाहि—उत्पतति श्येने तेन विभागमात्रं स्थाणोर्भवति, न तु देशान्तरसंयोगः। न तु विभागमात्रं चलतीति प्रत्ययस्यालम्बनम्, आश्रयान्तरसमवेतसंयोगसहितं वा, किन्त्वेकत्राश्रये समुदितयोस्तत्संयोगविभागयोश्चलतिप्रत्ययविषयत्वमिति। एवमाशङ्कां दर्शयित्वोत्तरमाह—अन्यतरकर्मजन्मनोरिति। अन्यतरस्य संयोगविभागौ यदा समुदिता(व)न्यतरस्मिन्नुत्पद्येते, तदा तत्रापि चलतिप्रत्ययप्रसङ्गः। एतदेवोदाहरणनिष्ठं दर्शयति—यदा स्थाणुरिति। [4]यदा स्थाणुरेकेन श्येनेन संयुज्यते, श्येनान्तराच्च वियुज्यते, तदा[5] श्येनकर्मजन्मानौ संयोगविभागौ स्थाणौ समुदितौ विद्येते इति स्थाणुश्चलतीति प्रत्ययः प्रसज्येत। ननु क्रमविशेषवन्तौ संयोगविभागौ [6]चलतीति प्रत्ययस्यालम्बनम्। तथाहि—पूर्वदेशविभागपुरस्सरोत्तरदेशसंयोगवांश्चलतीति प्रतीयते। ततो युगपच्छ्येनद्वय(विभाग)संयोगवति स्थाणौ न तत्प्रसङ्ग इत्याशङ्क्याह—न च क्रमविशेषवन्ताविति। विशिष्टक्रमोपेतौ संयोगविभागौ

---

१. नोभयक्रिया—**ग**, घ, ङ.
२. 'अपि' नास्ति—**ग**, घ, **ङ**.
३. 'अन्यतश्च वियुज्यते'—नास्ति—**ङ**.
४. यथा—**च**.
५. 'तदा'—नास्ति—**च**.
६. चलतिप्रत्ययस्य—**छ**.

**वन्तौ तदालम्बनम् । पुरःसंयुक्त[१]श्येनान्तरविभागपुरस्सरेऽपि श्येनान्तर संयोगेऽभावात् ।**

**उच्यते—**

**अच्छिन्नोत्पत्तयो देशविशेषत्यागसङ्गमाः ।**
**[२]तद्गोचराः पदार्थानामाकाशो देश इष्यते ॥ १८ ॥**

**न खलु संयोगविभागमात्रे[३] चलतीति प्रत्ययः । अपित्व[४]विच्छिन्नोत्पादसंयोगविभागप्रबन्धे[५] । स्थिते च तदभावः । नच**

---

चलतिप्रत्ययस्यालम्बनमित्येतदपि न युक्तम् । कुतः ? पूर्वसंयुक्तश्येनान्तरविभागपुरस्सरश्येनान्तरसंयोगो यदा भवति स्थाणोः, तदापि चलतिप्रत्ययस्याभावात् । तस्मान्न संयोगविभागालम्बनश्चलतिप्रत्यय इति ॥

अस्योत्तरमाह—उच्यते—

[६]अच्छिन्नोत्पत्तयो देशविशेषत्यागसङ्गमाः ।
तद्गोचराः पदार्थानामा[७]काशो देश इष्यते ॥ (इति) ॥

अयमर्थः—न संयोगविभागमात्रं चलतिप्रत्ययस्यालम्बनम् । नचार्थान्तरम्, किन्तु त एव संयोगविभागा अच्छिन्नोत्पत्तयस्तस्य गोचराः । चलित्वा स्थिते च तेषामेवंविशिष्टानामभावान्न चलतिप्रत्ययप्रसङ्गः । सर्वेषामेव पदार्थाना[८]माकाशं देशसंयोगमात्रात् । (देशः।

---

१. श्येनविभाग—**क, ग, घ, ङ.**
२. तद्गोचर.—**क, ख ;** तद्गोचर—**ग, घ, ङ.**
३. माने—**क, ख.**
४. अच्छिन्नो—**क, ख.**
५. प्रबन्ध.—**ग, घ, ङ.**
६. अच्छिन्नोत्पत्तय इति—**च.**
७. माकाश—**छ.**
८. माकाश देशः न सयोगमात्रात्—**च ;**

[१]स्थाणौ देशविशेषविषयौ [२]संयोगविभागौ; संयोगिमात्रस्या[३]देशत्वात्। नहि श्येनौ स्थाणोर्देशाविति प्रतियन्ति लौकिकाः। आकाश एव तु सकलदेशिपदार्थानां देश इति प्रतीमः। अतस्तत्प्रदेशसंयोगविभागावेव तदालम्बनमिति स्थाणौ न प्रसङ्गः॥

ननु व्योम्नोऽप्रत्यक्षत्वाद्वायुवनस्पतिसंयोग[४]विभागवत्तत्संयोगविभागानां प्रत्यक्षावृत्तित्वेनानैन्द्रियकत्वा[५]दिन्द्रियजन्मनः [६]प्रत्यक्षस्य विषयता न युक्ता।

---

तत्संयोगविभागाभ्यामेव 'चलति' इति प्रत्ययः। न संयोगविभागमात्रात्)। अत[७]स्थाणौ श्येनसंयोगविभागवत्यपि[८] आकाशेन संयोगविभागयोरभावा(त्त)द्देशसंयोग(विभाग): विषयत्वाच्चलतिप्रत्ययस्य न प्रसङ्ग इति। तदेव प्रपञ्चयति—न हि श्येनावित्यादिना प्रसङ्ग इत्यन्तेन। नात्र तिरोहितमिव किञ्चिदस्ति।

सकलपदार्थानामाकाशं देशः, तत्संयोगविभागाश्च चलतिप्रत्ययविषया इत्युक्ते चोदयति—ननु व्योम्न[९] इति। अयमभिप्रायः—आकाशस्य रूपादिरहितत्वेनाप्रत्यक्षत्वात्तत्संयोगविभागानामपि प्रत्यक्षत्वमयुक्तम्, [१०]प्रत्यक्षाप्रत्यक्षवृत्तित्वात्, यथा वायुवनस्पतिसंयोगविभागानाम्। चलतिप्रत्ययश्चेन्द्रियान्वयव्यतिरेकानुविधानादैन्द्रियकः। अतोऽस्य न तद्विषयता युक्तेति।

---

१. स्थाणोः देशविषयोः—क. ख.
२. 'संयोगविभागौ' इत्यादिः 'तत्प्रदेश' इत्यन्तो ग्रन्थः क, ख. मातृकयोर्न दृश्यते.
३. स्यादृष्टत्वात्—ङ.
४. 'विभाग' नास्ति—क, ख, ङ.
५. त्वादिति च जन्मनः—ख.
६. प्रत्ययस्य—ग, घ, ङ.
७. स्थाणोः—च.
८. 'अपि' नास्ति—छ.
९. व्योम इति—छ.
१०. प्रत्यक्षात् प्रत्यक्ष—छ.

**न न[१] युक्ता । अन्यथा—**

**कथं गम्येत वयसो नियता[२]धारदेशता ।**
**चलतोऽ[३]क्षातिवृत्ताश्चेद्विहायोदेशसङ्गमाः[४] ॥ १९ ॥**

**[५]अप्रत्यक्षत्वे हि [६]नभोविभागसंयोगादीनां कथं पतति पतत्रिणि [७]देशभेदाधिकरणज्ञानम् ? क्रियया कारणेन कार्यानुमानादिति चेत्—न ; नियतदे[८]शाधिकरणप्रतीतेः । इह प्राप्तः,[९] नेह इति [१०]नियतप्रत्ययो न देशविशेषसंयोगाप्रत्यक्षतायामवकल्पते । वियद्वितताालोक[११]निवहभेदादुपपन्न [१२]इति चेत्—स[१३] एव तद्याकाशदेश इति [१४]तद्वृत्तिसंयोगविभागौ प्रत्यक्षौ ।**

---

अत्रोत्तरमाह—नन युक्ता । अन्यथा—

कथं गम्येत वयसो नियताधारदेशता ।
चलतोऽक्षातिवृत्ताश्चेद्विहायोदेशसङ्गमाः ॥ (इति) ॥

अयमभिप्रायः—अप्रत्यक्षत्वेऽपि नभसः तत्संयोगविभागानां प्रत्यक्षत्वमेष्टव्यम् । अन्यथा कथं गम्येत इह प्राप्त इति । अत्र हि इह प्राप्त इति नभोभागेन संयोगः पतत्रिणोऽवगम्यते । तच्च नोपपद्यते, यदि विहायोदेशसङ्गमाः आकाशदेशसंयोगाः अक्षातिवृत्ताः इन्द्रियागोचराः भवेयुरिति । एतद्व्याचष्टे—अप्रत्यक्षेत्यादिना । तत्र शङ्कते—[१५]क्रियया

---

१. ननु युक्ता—**ग, घ, ङ.** अयं नास्ति—**ख** मातृकायाम्.
२. अपदेशता—**ग, घ, ङ.**
३. अक्षान्निवृत्ताश्चेत्—**ग, घ, ङ.**
४. सङ्गमान्—**क, ख.**
५. प्रत्यक्षत्वे—**क, ख.**
६. नभोभागविभागसंगमानां कथं खं पतेति—**ख.**
७. देशविशेषा—**क, ख.**
८. देशाधारताप्र—**क, ख.** देशाधारप्र—**ग, घ, ङ.**
९. प्राप्तौ—**क.**
१०. ' नियतप्रत्ययो ' नास्ति—**ख.**
११. निचयावयव निबन्धनत्वात्—**ग, घ, ङ.**
१२. मिति—**ख, ग, घ, ङ.**
१३. ' स एव तद्याकाशदेशः ' इति नास्ति—**क.**
१४. तद्वृत्ति—**क, ख.**
१५. क्रियाकारणेनेति—**च.**

**अपि च—प्रत्यक्षाप्रत्यक्ष[1]वृत्त्योरपि संयोगविभागयोः सिद्धयोः प्रत्यक्षत्वकल्पना युक्ता, [2]न त्वसिद्धस्य कर्मणः। ताभ्यामेव तर्हि**

---

कारणेनेति। अयमाशयः—क्रिया संयोगविभागयोः हेतुभूता प्रत्यक्षगृहीता स्वकार्याणां संयोगविभागानां अनुमाने लिङ्गं भवति, ततश्च इह प्राप्त इति देशविषयमनुमानमिति नोक्तदोष इति। एतन्निराकरोति—न नियतदेशाधिकरणप्रतीतेरिति। इह प्राप्तो नेह इति न विशिष्ट-देशसंबन्धनियतः प्रत्ययो विशिष्टदेशनियतपदार्थाश्रितसंयोगाप्रत्यक्षतायामवकल्पते। पुन-श्शङ्कते—वियद्विततालोकनिवहभेदादुपपन्न इति चेदिति। वियत्याकाशे विततो यः आलोक-निवहः, तस्य प्रत्यक्षत्वात्तत्संयोगस्यापि प्रत्यक्षत्वोपपत्तेः तद्भेदादेव इह प्राप्तो नेह इति प्रत्यय उपपन्न इति चेदिति। परिहरति—स एव तर्हीति। इहेति प्रत्ययस्यालोकनिवहो विषयश्चेत् स एवाकाशदेश इति तद्वर्तिसंयोगविभागौ प्रत्यक्षाविति॥ यद्यप्याकाशसंयोगविषय एव इहेति प्रत्ययः, आकाशं चाप्रत्यक्षम्, तथापि तत्संयोगविभागानामेव चलतिप्रत्ययालम्बनत्वं ग्रहीतुं युक्तम्, न तद्व्यतिरिक्तस्य कर्मण [एव] इति।

एतदेव हेत्वन्तरेण द्रढयति—अपि चेत्यादिना। अयमर्थः—देशसंयोगविभाग-योस्सद्भावस्तावत् [3]सिद्धः। प्रत्यक्षाप्रत्यक्षवृत्तित्वेन तु प्रत्यक्षत्वमेव सन्दीत्य(न्दिह्य)मानं वर्तते। कर्मणः पुनस्सद्भावोऽप्यसिद्धः। दूरे प्रत्यक्षता। तत्र कर्मणः स्वरूपप्रत्यक्ष-त्वद्वयकल्पनात्सिद्धयोः संयोगविभागयोः प्रत्यक्षत्वमात्रकल्पनं वरम्, लाघवादित्यभि-प्रायः। एवं क्रियायाः प्रत्यक्षत्वे निराकृते तत्सद्भावं संयोगविभागकार्यलिङ्गकेनानु-मानेन समर्थयतां मतमनुभाष्य(ष)ते—ताभ्यां तर्हीत्यादिना। भवतु संयोगविभागावेव प्रत्यक्षौ, न क्रिया। [4]तान्तु संयोगविभागाभ्यां लिङ्गाभ्यामनुमिमीमहे। कथं पुनः संयोगविभागयोः क्रियां प्रति हेतुत्वमित्याशङ्कयाह—कादाचित्कयोरहेतुत्वानुप[5]पत्तेरिति। संयोगविभागौ

---

१. वृत्त्यो—**ख.**
२. न त्वप्रसिद्धस्य—**ख.**
३. सिद्धप्रत्यक्षा—**च.**
४. ताम्यान्तु—**च**
५. पत्तिरिति—**च.**

**संयोगविभागाभ्यां क्रियामनुमिमीमहे, कादाचित्कयोरहेतुत्वानुपपत्तेः। कादाचित्क[1]त्वादेव चाश्रयमात्रहेतुत्वायोगात् हेत्वन्तरापेक्षणात् ।**

**नैतत्सारम्; यतः—**

**नित्यत्वे सर्वदा जन्म स्यात्संयोगविभागयोः ।**
**अनित्यत्वे[2]ऽस्य यो हेतुस्तयोरेवास्तु तेन किम् ॥ २० ॥**

**तद्धि कर्म संयोगविभागाभ्यां नित्यमनित्यं वा अनुमीयते। नित्यत्वे हेतुसन्नि[3]धानाद्धेत्वन्तरानपेक्षत्वाच्च सदा संयोगविभागो-**

---

तावत्कादाचित्कौ, न नित्यौ। अतस्तयोरहेतुत्वं नोपपद्यते। भवितव्यमन्येन केनचिद्धेतुना। भवतु कादाचित्कत्वाद्धेतुमात्रापेक्षा संयोगविभागयोः। हेतुत्वं च [4]तदाश्रयस्यैवाश्रीयताम्। तत्र कथं तद्व्यतिरेकिणी क्रिया अनुमीयते इत्येतामाशङ्कामपनेतुमाह—कादाचित्कत्वादिति। आश्रयमात्रहेतुत्वानुपपत्तौ सिद्धायां यदनयोः कादाचित्कत्वम्, ततः कादाचित्कत्वादाश्रयव्यतिरिक्तस्य हेतोरनुमातुं शक्यत्वादनुमेया क्रिया। कथं तर्ह्याश्रयमात्रस्य हेतुत्वानुपपत्तिः? उच्यते। सत्यप्याश्रये कदाचिदेव संयोगविभागावुत्पद्येते, न सर्वदा। अतो न तन्मात्रहेतुकौ। यश्च तद्व्यतिरिक्तो हेतुः तयोः, सा क्रियेत्युच्यते।

एतन्निराकरोति—नैतत्सारम्—(यतः)

नित्यत्वे सर्वदा जन्म स्यात्संयोगविभागयोः ।
अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम् ॥

यत्संयोगविभागाभ्यामनुमातुमिष्टं कर्म तस्य नित्यत्वं वा स्यात्, अनित्यत्वं वा। नित्यत्वे सर्वदा तत्कार्यत्वाभिमतयोस्संयोगविभागयोर्जन्म स्यात्। न चास्ति। अनित्यत्वे अस्यापि

---

१. त्वादेवाश्रयहेतुत्वानुपपत्तेः तन्मात्रहेतुत्वानुपयोगात्—**ख**.
२. तस्य हेतुः—**क, ख**.
३. धानात्तदन्यानपेक्षणात्सर्वदा—**क, ख**.
४. तदाश्रित—**च**.

**त्पादप्रसङ्गः। अनित्यत्वे तु[1] तस्यापि हेतुमत्त्वात्तद्धेत्वभिमतादेव तत्सिद्धिरिति [2]किमन्तर्गड्डुना कर्मणा।**

**यस्तु मन्यते—नित्यत्वादन्तरङ्गत्वाच्च कर्मैव कारणं संयोगविभागयोः, न प्रयत्नादि[3], बहिरङ्गत्वात् [4]व्यभिचारित्वाच्च। तथाहि—कर्मैकार्थसमवायिनः संयोगविभागसंस्काराः। कर्मणि च सति**

---

कर्मणोऽन्यो हेतुरन्वेष्यः पूर्वोक्तेन न्यायेन। तथा च सति यः कर्मणो हेतुत्वेनाभिमतोऽर्थः स तयोरेव संयोगविभागयोर्हेतुरस्तु, किमन्तराले कल्पितेन कर्मणा। अमुमेवार्थं स्पष्टीकरोति—तद्धीत्यादिना कर्मणेत्यन्तेन ग्रन्थेन।

कर्मणो यो हेतुरभिप्रेतः स संयोगविभागयोरेवास्तु, [5]न कर्म तयोः कारणमित्युक्ते शङ्कते—[6]न नित्यत्वा (यस्तु मन्यते—नित्यत्वा) दित्यादिना। अयमर्थः—कर्मैव संयोगविभागयोः कारणम्, न तत्कारणत्वाभिमतः प्रयत्नादिः। नित्यं हि कर्म अन्तरङ्गञ्च। नित्यत्वं कार्याव्यभिचारित्वमभिप्रेतम्। अन्तरङ्गत्वं च कार्येणैकार्थसमवायः। अतो नित्यत्वादन्तरङ्गत्वाच्च कर्मैव कारणम्; न प्रयत्नादिः(दि), वैपरीत्यात्, यतस्तद्बहिरङ्गम्, व्यभिचारि च। तथाहीत्यादिना कर्मणो नित्यत्वमन्तरङ्गत्वञ्च दर्शयति। यस्मिन्करचरणादौ कर्मणस्समवायः, तस्मिन्नेव संयोगविभागसंस्काराणामपीत्यन्तरङ्गत्वम्। अत्र संस्कारशब्देन इष्वादिसमवायिनो वेगादेर्ग्रहणम्। तस्य च संयोगविभागाभ्यां तुल्यन्यायत्वात्प्रासङ्गिकमभिधानम्। कर्मणि च सतीत्यादिना कर्मणो नित्यत्वं दर्शयति। कर्मणि सति नियमेन संयोगविभागयोर्भावः। ततः कार्यं प्रति कर्म न व्यभिचरति। ननु कर्मणि सति नियोगतः [7]कार्यभावः कुतो ज्ञायते इत्याशङ्क्याह—कार्यानुमितस्येति। यः कार्येणैवानुमीयते हेतुः प्रमाणान्तरस्यागोचरः,[8] कार्याभावे तस्य सत्तायां प्रमाणं नास्ति। कार्यैकगम्यस्य कार्याभावे

---

१. 'तु' नास्ति—क, ख.
२. किन्तर्ह्यधुना कर्मणा—क, ख. किमन्तर्गतगड्डुना—ङ.
३. प्रयत्नादिः—ग, घ, ङ.
४. व्यभिचाराच्च—क, ख.
५. 'न' नास्ति—छ.
६. 'न' नास्ति—छ.
७. कार्याभावः—छ.
८. अगोचरं—च.

[१]नियोगतस्तत्सद्भावः, [२]कार्यानुमितस्य हेतोस्तदभावे सत्ताप्रमाणाभावात्। प्रयत्नस्त्वात्मस्थः। सत्यपि च प्रयत्ने बहुषु संयुक्तेषु [३]कश्चिदेव [४]प्रयत्नाद्देशान्तरं प्राप्नोति।

स वक्तव्यः—

प्रसिद्धस्यान्तरङ्गत्वान्नित्यत्वाद्धेतुता भवेत्।
अकारणत्वमन्यस्य यदि कर्म ततः कथम्॥ २१॥

बहुसमवधाने हि नित्यत्वान्तरङ्गत्वाभ्यां प्रसिद्ध[५]सद्भावं वस्तु

---

प्रमाणाभावादभाव एव कर्मणोऽवसीयत इति न तस्य कार्यं प्रति व्यभिचार इति। प्रयत्नस्त्वात्मसमवायित्वाद्बहिरङ्गं न भिन्नाधिकरणस्य कार्यस्य कारणं भवितुमर्हतीत्यर्थः। प्रयत्नस्य कार्यं प्रति व्यभिचारं दर्शयति—सत्यपि च आत्मस्थे प्रयत्ने बहुषु शरीरावयवेषु प्रयत्नवता आत्मना संयुक्तेषु कश्चिदेवैकः शरीरावयवः संयोगविभागकार्यवान् भवति, न सर्वः। अतो व्यभिचारी प्रयत्नो न हेतुर्भवितुमर्हति—इति।

एवं पराभिप्रायमाशङ्क्योत्तरमाह—स वक्तव्य इति। 'यस्तु मन्यते' इत्यत्र यच्छब्देन 'स वक्तव्यः' इत्यत्र तच्छब्दस्य संबन्धः।

प्रसिद्धस्यान्तरङ्गत्वान्नित्यत्वाद्धेतुता भवेत्।
अकारणत्वमन्यस्य यदि कर्म ततः कथम्॥ इति॥

नित्यत्वान्तरङ्गत्वाभ्यां हेतुभ्यां प्रसिद्धसद्भावस्य वस्तुनः हेतुत्वमात्रमेवानेकपदार्थसन्नि-

---

१. 'नियोगत.' इत्यादिः 'कश्चिदेव' इत्यन्तो ग्रन्थः नास्ति—क, ख. मातृकयो.।
२. तत्कार्या—ग, घ.
३. किंश्चिदेव—ग, घ, ङ.
४ निर्देशात्—क, ख.
५. स्वभाववस्तु—ख.

**हेतुरिति [1]व्यवस्थाप्यते, नत्वप्रसिद्ध[2]सद्भावस्य कल्पना। तद्विपरीतस्य हेतुत्वमनुपपन्नमिति, तादृशम[3]प्रसिद्धसद्भावमपि परिकल्प्यत इति यदि मतम्, हन्त तर्हि कर्मणोऽपि तदकारणमापतति।**

**अथ मतं[4] व्यधिकरणमपि [5]सम्बन्धात् कुतश्चिच[6] प्रतिबन्धाद् दृष्टव्यभिचारमपि [7]तत्कर्मणः कारणम्, संयोगविभागाभ्यां [8]किम-**

---

धानकृतसन्देहापोहनेन[9] व्यवस्थापयितुं युक्तम्, न पुनरप्रसिद्धसद्भावस्य वस्तुनः स्वरूपसिद्धिरपीति। यदि मन्येत व्यभिचारिणो बहिरङ्गस्य च कारणत्वं न संभवतीति अप्रसिद्धसद्भावमपि कर्म कारणं कल्प्यत इति। तदेतदनुपपन्नम्। कर्मणोऽपि पूर्वोक्तेन न्यायेन ततः प्रयत्नादिकारणादुत्पत्त्यनुपपत्तिप्रसङ्गादिति। एतद्विवृणोति—बहुसमवधाने इत्यादिना। अयमर्थः—यत्रैकं प्रसिद्धसद्भावं वस्तु केनचित्कार्येणान्वयव्यतिरेकि भवति, बहवश्चान्ये पदार्थाः सन्निहिता भवन्ति, तत्रेदमेवास्य कारणं नान्यत् सन्निधानाविशेषेऽपीति विवेकमात्रं नित्यत्वान्तरङ्गत्वाभ्यां शक्यावधारणम्, न पुनरसिद्धसद्भावस्य सद्भावकल्पना इति श्लोकपूर्वार्धस्यार्थः॥ उत्तरार्धं व्याचष्टे—तद्विपरीतस्येत्यादिना[10] हन्त तर्हीत्यतः [11]प्राक्तनग्रन्थेन परमतमनुभाष्योत्तर[12]मुत्तरेणापततीति .... (तीत्यन्तेनाह?) इति विभागः।

पुनरप्याशङ्कते—अथ मतमिति। यद्यपि प्रयत्नादि व्यधिकरणमात्मस्थत्वात् तथापि तत्कर्मणः कारणं भवत्येव, सम्बन्धान्तरस्य भावात्[13] .... .... [संबन्धोऽस्ति]। अन्यथा सर्वव्यापारोच्छेदप्रसङ्गात्। ततश्च तद्द्वारकः शरीराश्रितेन [न] कर्मणा आत्मस्थस्य प्रयत्नादेः

---

१. विविच्यते—ख.
२. सत्त्वभावस्य कल्पनात्—ख.
३. मसिद्धसत्त्वभाव—ख.
४. 'मतं'–नास्ति—क, ख, ग, घ, ङ.
५. संबन्धात् केनचित् कुतश्चित—ग, घ.
६. 'च'–नास्ति—ख.
७. 'तत्'–नास्ति—ख.
८. विभागादिभिः—ख.
९. पोहेन—छ.
१०. रीतेत्यादिना—च
११. प्राक्तनेन—छ.
१२. मुत्तरेणा ... ... ... यद्यपि—च.
१३. भावात् ... ... ... व्यापारोच्छेद—च.

**पराद्धम्? [१]येन [२]दृष्टं कारणं परित्यज्यादृष्टं मृग्यते। प्रायेण च कर्महेतवः संयोगविभागैकाधिकरणा इति यत्किञ्चिदेतत् ।**

**हेतुसत्ता च कार्येण ततः प्रागनुमीयते ।**
**वर्तमानावभासः स्यान्न [३]क्रियाधिगमस्ततः ॥ २२ ॥**

**कार्योपजननं प्रत्यनन्तर[४]कालीनं [५]हेतुसत्त्वं तदुपयोगि, न**

---

सम्बन्धोऽस्तीति तस्य तत्कारणत्वमुपपद्यत इति न बहिरङ्गत्वविरोधः। न चापि व्यभिचा[६]रितत्वविरोधः, यतः कारणस्य कार्यव्यभिचारः कुतश्चित्प्रतिबन्धादुपपद्यते—यथा दहनेन्धनसंयोगस्य धूमकारणस्य मन्त्रादिप्रतिबन्धात्कार्यस्य व्यभिचारः, तथेहापि प्रयत्नाश्रयेणात्मना सम्बन्धे सर्वशरीरावयवानां समाने सत्यपि क्वचित्कर्मणोऽनुदयः[७] कुतश्चिददृष्टात्प्रतिबन्धादुपपद्यत इति। हन्त तर्हि भवतैव भवन्मतं परित्यक्तम्! भवदुक्तेनैव न्यायेन प्रयत्नादेः संयोगादिकार्यहेतुत्वस्यापि संभावितत्वात् कर्मकल्पनायाः प्रमाणाभावात् ॥

इतश्च संयोगविभागाख्यकार्यानुमेयक्रिया न संभवतीत्याह—

हेतुसत्ता च कार्येण ततः प्रागनुमीयते ।
वर्तमानावभासस्स्यान्न क्रियावि(धि)गमस्ततः ॥ (इति) ॥

कार्योदयात्प्राक्कालसंबन्धिनी हेतुसत्ता अनुमीयते, न कार्यकालसंबन्धिनी। ततश्च चलतीति प्रत्ययः न वर्तमानाकारो भवेत्, भवति च। तस्मात् नासौ संयोगादिकार्यलिङ्गजन्मेति श्लोकस्यार्थः।

अस्यैव प्रपञ्चः कार्योपजननमित्यादिः। अस्यायमर्थः—यत्कार्यपूर्वक्षणवर्ति हेतोः

---

१. यत्—ख, ङ.
२. दृष्टं परित्यज्यादृष्टं/करणं कल्प्यते—क, ख.
३. क्रियावगम—ङ.
४. कालं—क, ग, घ, ङ.
५. 'हेतुसत्त्वं' इत्यादिः 'कार्यकालं' इत्यन्तो ग्रन्थो नास्ति—ङ.
६. चारित्व—छ.
७. अनुदयं—छ.

**कार्यकालम्[1], तस्य तदा सिद्धत्वात् । अतः [2]कार्येण कारणमनुमि-मानः [3]तत्प्राक्कालमेवानुमिमीते, न वर्तमानकालम् । तथा च फल-लिङ्गात्मजन्मा[4] ततः प्राक्कालक्रियागोचरः प्रत्ययो न [5]वर्तमानाव-ग्रहः स्यात् ।**

---

सत्त्वम् तदेव कार्योत्पत्तौ उपयोगि, न कार्यसमकालीनम्, तदा कार्यस्य सिद्धत्वात् साध्यावस्थस्यैव च तस्य कारणापेक्षणात्, अन्यथा अतिप्रसङ्गात् । अतः कार्यपूर्वक्षणवर्तिकारण-सत्त्वं कार्येणानुमीयते इति श्लोकपूर्वार्धस्यार्थः । ननु च प्राक्कालीनमेव हेतुसत्त्वं फललिङ्गेनानुमीयताम्[6], किमेतावता हीयते ? सर्वथा संयोगविभागलक्षणफललिङ्गानुमेया क्रिया सिध्यतीत्याशङ्कोत्तरतया उत्तरार्धाविष्करणायाह—तथा चेति । यद्ययं क्रियाप्रत्ययः फललिङ्गजन्य(न्म)तया ततः प्राक्कालक्रियाविषय इष्यते, तदा न कदाचिदपि वर्तमानाकारः स्यात् । नचैवमस्ति । तस्मान्न फलानुमेया क्रिया ॥

ननु चलतिप्रत्ययस्य संयोगविभागविषयत्वाद्वर्तमानाकारत्वमुपपद्यते । क्रियाज्ञानं ह्यन्यदेव संयोगविभागप्रभवम्[7], तच्च न वर्तमानाकारम्—इति । अत्रोच्यते । यदि चलति-प्रत्ययातिरेकेणान्यः क्रियाग्राही प्रत्यय उपलभ्येत, तदा स्यादेतच्चोद्यम् । नच तदस्ति । अत-श्चलतिप्रत्ययस्य वर्तमानाकारत्वे क्रियाप्रत्ययो न वर्तमानाकार इति न[8] शक्यं वक्तुम् । तस्मान्नानुमेया क्रिया कार्येण ॥

कारणस्य वर्तमानतया अनुमानानुपपत्तौ अनुपपत्त्यभावो हेतुः सामान्येन पूर्वमुक्तः[9] [इति]; इदानीं कार्यक्षणे कारणस्याभावनिश्चयादपि न वर्तमानतया अनुमानं शक्यत इति प्रकृते विशेषतोऽनुपपत्तिप्रदर्शनायाह—अपि च—

---

१. कालः—ख.

२. कार्येणेममनु—क, ग, घ, ङ.

३. स्तत्काल—क, ग, घ, ङ. 'अतः' इत्यादिः 'काल' मित्यन्तो ग्रन्थः नास्ति—ङ.

४. जन्म तत्प्राक्काल—क.

५. वर्तमानाकारग्रहः—ङ.

६. मीयते—च.

७. विभागलिङ्गप्रभवम्—छ.

८. 'न' नास्ति—च.

९. मुक्तमिति—च.

**अपि च—**

**संयोगान्तं वर्तमानं तत उन्नीयते कथम् ।**
**विभागतो मीयमानं स्थाणावप्येतदापतेत् ॥ २३ ॥**

**संयोगान्तं[१] कर्म संयोगोत्पादज्ञानक्षणोत्तरकालमनुमीय[२]-मानं न वर्तमानम् । संयोगविभागौ तु वर्तमानौ । [३]ज्ञानानुरूपश्च**

---

संयोगान्तं वर्तमानं तत उन्नीयते कथम् ।
विभागतो मीयमानं स्थाणावप्येतदापतेत् ॥ (इति) ॥

अयमाशयः—किं संयोगादेव केवलादनुमातुमिष्टं कर्म, किं वा केवलाद्विभागात, अथवोभाभ्यामपि संयोगविभागाभ्याम् ? यदि तावत्केवलात्संयोगात् उभाभ्यां समुदिताभ्यां वा अनुमीयेत, तदा न वर्तमानमनुमातुं शक्यम् । संयोगोत्पत्तितज्ज्ञानक्षणद्वयोत्तरक्षणे ह्यनुमानज्ञानमुत्पद्यते । अनुत्पन्नस्याज्ञातस्य च लिङ्गत्वानुपपत्तेः । तस्याञ्चावस्थायां न कर्म वर्तमानम्, तस्य फलोत्पत्तिमात्रापवर्गित्वात् उत्तरक्षणेऽवस्थानाभावात् । अथ विभागमुत्पाद्य संयोगोत्पत्तिपर्यन्तं कर्म तिष्ठतीति विभागक्षणे वर्तमानमेवेति विभागादेव केवलात्तस्यानुमानं मन्यते सः, तदा स्थाणावपि श्येन इव तद्विभागवति कर्मानुमानप्रसङ्ग इति तात्पर्यम् ।

अत्रैषा अक्षरयोजना । [४]संयोगा(गोऽ)न्तोऽवधिर्यस्य तत्संयोगान्तं प्रकृतं कर्म तत् ततः संयोगाल्लिङ्गात् कथं वर्तमानम् उन्नीयते अनुमीयते ? न कथञ्चिदपि वर्तमानतया अनुमातुं शक्यते । विभागतो हेतोरनुमीयमानं कर्माभ्युपगम्यमानं स्थाणावप्यनुमेयमापतेदिति ।

एतदेव विवृणोति—संयोगान्तमित्यादिना । ननु संयोगविभागविषयत्वेऽपि क्रियाप्रत्ययस्यैतत् [५]दूषणं समानमेवेत्याशङ्क्याह—संयोगविभागौ त्विति । तुशब्देन शङ्कामपा-

---

१. संयोगान्तकर्म—**क, ख.**
२. काले मीय—**क, ख.**
३. ज्ञानस्वरूपानु—**क, ख.** ज्ञानरूपानु—**ग, घ, ङ.**
४. संयोगान्तो विधिः—**च.** गान्तोऽवधिः—**छ.**
५. यस्यैकदूषणं—**च.**

**विषयो [1]न तद्विपरीतः। तस्मात्तयोरेव चलतीतिप्रत्ययविषयता, न [2]तु कर्मणः।**

**अथ विभागानुमेय[3]त्वात्तमुपजनय्य [4]आसंयोगोत्पादं व्यवस्थानाद्वर्तमानमनुमीयत इति। तदसत्। स्थाणावपि प्रसङ्गात्, विभागस्य तुल्यत्वात्। [5]तत् गुणविशेष एव धातूपा[6]दानः क्रिया,**

---

करोति। न चलतिप्रत्ययस्य संयोगविभागविषयत्वे वर्तमानाकारत्वविरोधः, तयोर्वर्तमानत्वात्, ज्ञानस्य तत्कार्यलिङ्गप्रभवत्वानभ्युपगमात् एककालत्वोपपत्तेः। नन्ववर्तमानमपि कर्म वर्तमानाकारस्य प्रत्ययस्य विषयः स्यादित्याशङ्क्याह—ज्ञानानुरूप इति। यदाकारोऽयं (रो यः) प्रत्ययः तस्य तदाकार एव विषयो भवति न तद्विपरीतः, अन्यथा भ्रमत्वप्रसङ्गात्। नचास्य भ्रमत्वमस्ति, तद्धेतुद्वयाभावादिति। तस्मादित्युपसंहरति।

श्लोकोत्तरार्धव्यावर्त्यामाशङ्कां दर्शयति—अथेत्यादिना अनुमीयते इत्यन्तेन ग्रन्थेन। अस्यायमर्थः—पूर्वदेशविभागमुत्पाद्योत्तरदेशसंयोगोत्पत्तिपर्यन्तमवस्थानं कर्मणोऽस्तीति विभागक्षणे वर्तमानमेव। अतो विभागेन केवलेन वर्तमानमेव कर्मानुमीयत इति। तन्निराकरणार्थतयोत्तरार्धं व्याचष्टे—तदसदित्यादिना तुल्यत्वादित्यन्तेन ग्रन्थेन। इदानीं संयोगविभागादिगुणविशेषविलक्षणक्रियापदार्थाभावमुपपादितमुपसंहरति—तद्गुणविशेष एवेत्यादिना अभिधेय (यः स्यात्) इत्यन्तेन ग्रन्थेन। अस्यायमर्थः—(तत्) तस्माद्यथोक्तेन न्यायेन, गुणविशेष एव

---

१. न तु—**क, ग, घ, ङ.**
२. 'तु' नास्ति—**ख.**
३. मेयत्वं तमुप—**क, ख.**
४. आसंयोगाद्व्यवस्थानात्—**ङ.** संयोगोत्पादावस्थानात्—**ख.**
५. तस्माद्गुण—**ग, घ, ङ.**
६. दानक्रिया—**ख.**

**न [१]तु तदतिरिच्यमानात्मा क्रियापदार्थः, [२]यः प्रत्ययस्य धातोर्वा अभिधेयः स्यात् ।**

**यदप्यनुमानम्—यत्सर्वेषु [३]साधनेषु सन्निहितेषु सत्सु कदाचित्पचतीति प्रत्ययो भवतीति । तन्न—**

**सिद्धेर्गुणविशेषेण[४] पचतीत्यपि[५] संविदः ।**
**क्रियापदार्थस्यान्यस्य नानुमानं [६]प्रकल्पते ॥ २४ ॥**

---

धात्वभिधेयः क्रियाव्यवहारगोचरः केनचिदुपाधिना, न ततस्तत्त्वान्तरं क्रियापदार्थः, यः प्रत्ययस्यार्थो धातोर्वेति विचार्येत । सिद्धे हि धर्मिणि धर्माणां विचारः प्रवर्तते इति ।

इदानीं क्रियावादिना क्रियासद्भावसाधनायोपन्यस्तमनुमानं दूषणायानुभाषते—यद्य(द)पीत्यादिना भवतीत्यन्तेन ग्रन्थेन । अयमर्थः—पचतीत्येष प्रत्ययः धर्मित्वेनोपादीयते, कर्त्रादिसकलकारकव्यतिरिक्तार्थान्तरालम्बन इति साध्यो धर्मः । तेषु सन्निहितेष्वपि कदाचिदेवोत्पद्यमानत्वात् । यस्मिन्प्रतीयमानेऽर्थे यः कदाचिदेव प्रत्यय उत्पद्यते, स तदतिरिक्तार्थालम्बनो दृष्टः—यथा सतोरपि दण्डदेवदत्तयोः कदाचिदेवोत्पद्यमानो दण्डीति प्रत्ययः तदतिरिक्ततत्संबन्धालम्बन इति । यच्च सर्वातिरिक्तं तत्संबन्धि पचतिप्रत्ययालम्बनम्[७], तत्कर्मेति । एतद्दूषयितुमाह—तत्र(न्न)—

सिद्धेर्गुणविशेषेण[८] पचतीत्यपि संविदः ।
क्रियापदार्थस्यान्यस्य नानुमानं प्रकल्पते ॥ (इति) ॥

---

१. न तदतिरिच्यमाना इति चापदार्थः—**ख.** न तु तदतिरिच्यमानः—**ङ.**
२. 'यः' नास्ति—**ख.**
३. सन्निहितेषु साधनेषु कदाचित् पचतीत्येतत्—**ख.**
४. विशेषणं—**ख.**
५. त्वभि—**ङ.**
६. प्रवर्तते—**क, ख**; प्रकल्प्यते—**ग, घ, ङ.**
७. लम्बनभूतं—**छ.**
८. विशेषेणेति—**च.**

**यः खलु तण्डुलावयवेषु विभागलक्षणः [1]प्रशिथिलसंयोग[2]-लक्षणो वा गुणभेदस्तस्य सन्निहितेष्वपि साधनेषु कदाचिद्भावात्तन्निबन्धनः [3]पचतीति प्रत्यय इति [4]न तत्र[5] [6]क्रियापदार्थानुमानं युक्तम्।**

**तत एव तर्हि गुणविशेषात्कादाचित्कात्तदस्तु। अन्यथा**

---

अयमर्थः—किं पचतीति प्रत्ययस्य सर्वकारकातिरिक्तं किञ्चिदालम्बनमस्तीत्येतावन्मात्रं साध्यते, किं वा क्रियापदार्थ आलम्बनमिति? आद्ये कल्पे सिद्धसाध्यताप्रसङ्गः, सर्वकारकातिरिक्तस्य गुणविशेषस्य पचतिप्रत्ययालम्बनत्वस्याभ्युपगमात्। अथ गुणविशेषस्यालम्बनत्वानुपपत्त्या पारिशेष्यात्क्रियापदार्थसिद्धिरित्यभिप्रायः, सोऽपि न समीचीनः, चलतीति प्रत्ययस्य(स्येव) पचतीति प्रत्ययस्यापि गुण[7]विशेषेणोपपत्तेः। द्वितीये तु कल्पे दृष्टान्ताभावः। नहि क्वचिदपि क्रियालम्बनः कश्चित्प्रत्ययः क्रियापलापवादिनः प्रसिद्धोऽस्ति, येन दृष्टान्तः स्यात्। अतो गुणविशेषातिरिक्तस्य क्रियापदार्थस्यानुमानं न प्रकल्पत इति श्लोकस्य तात्पर्यार्थः। नात्राक्षरवैषम्यमस्ति। यो गुणविशेषः पचतिप्रत्ययस्योपपादकोऽभिप्रेतः तस्य स्वरूपनिरूपणद्वारेण तदुपपादकत्वोपपादनायाह—यः खल्वित्यादि। अस्ति तावत्तण्डुलानां स्थाल्युदरवर्तिनि वारिणि सूक्ष्मैरग्न्यवयवैः [8]व्याप्तैः विपरिवर्तमानानामवयवेषु विभागलक्षणो गुणविशेषः प्रशिथिलसंयोगलक्षणश्च। [9]तयोश्च सत्स्वपि साधनेषु कदाचिदेव भावात् कादाचित्कस्य [10]च पचतीति प्रत्ययस्य विषयत्वोपपत्तेः न तद्व्यतिरिक्तस्य क्रियापदार्थस्यानुमानं युक्तमिति।

पुनः क्रियानुमानबाधाह—तत एवेत्यादि। अयमर्थः—मा भूत्पचतीति प्रत्ययात्क्रि-

---

१. लक्षणो वा शिथिल—**ख**.
२. अवयवसंयोग—**ग, ङ**.
३. पचतीत्यपि—**क, ग, घ, ङ**.
४. 'न' नास्ति—**क, ग, घ, ङ**.
५. ततः—**ख**.
६. क्रियानुमानं—**क**.
७. विशेषणो—**च**.
८. व्याप्ते—**च**.
९. 'तयोश्च'—नास्ति—**च**.
१०. 'च' नास्ति—**च**.

**साधनसन्निधिमात्र एवैष स्यात्। न, [१]कर्मण्यपि तथा प्रसङ्गात्; कर्मान्तरानुमाने चानवस्थाप्रसङ्गात्;[२] अग्निसंयोगस्य च[३] क्रमेण भावात् प्रकृष्यमाणत्वाच्च तद्धेतोर्न[४] तस्य साधनसन्निधिमात्र एव भावः। तस्यैव तर्हि संयोगस्य कारणं कर्मेति चेत्—न, प्रयत्नादेरेव कर्महेतोस्तद्धेतुत्वात्।**

---

यानुमानम्, तस्य गुणविशेषेणैवोपपत्तेः। येन गुणविशेषेण तस्योपपत्तिर्निरूपिता, तत एव गुणविशेषात्तत्क्रियानुमानमस्तु, तस्य क्रियाप्रभवत्वात्। यदि पुनरस्य क्रियाप्रभवत्वं नाङ्गीक्रियते साधनसन्निधिमात्रनिबन्धनत्वञ्चाभ्युपगम्यते, तदा [५]साधनसन्निधिमात्र एव(ष) भावः स्यात्। न चास्ति। अतः क्रियानुमानं युक्तमेवेति। एतन्निराकरोति—नेत्यादिना। अयमर्थः—न गुणविशेषादपि हेतोः कर्मानुमानं युक्तम्, कर्मण्यपि तथा प्रसङ्गात्। नहि कर्मापि साधनसन्निधिमात्र एव भवति। अतस्तत्रापि कर्मान्तरमनुमेयं स्यात्। कर्मा(न्तरा)-नुमाने चानवस्थाप्रसङ्गात्। यत्पुनरुक्तं क्रियानुमानवादिनः(ना)—क्रियानपेक्षत्वे पचति-प्रत्ययस्यालम्बनाभिमतस्य गुणविशेषस्य साधनसन्निधिमात्र एव भावप्रसङ्ग इति। तत्राह—अग्निसंयोगस्येति। योऽयमग्निसंयोगः तण्डुलावयवानाम्, स तेषां विभागलक्षणगुणविशेषस्य हेतुः। स च क्रमेण भवति, क्रमेण च प्रकृष्यते। त(त)स्तस्य तद्धा(द्धे)तोः क्रमेण भावात् प्रकृष्यमाणत्वाच्च न तस्य साधनसन्निधिमात्र एव भावप्रसङ्ग इति। क्रियानुमानवादिनो मतं शङ्कते—तस्यैव तर्हीति। यद्यग्निसंयोगलक्षणो गुणविशेष एव तण्डुलावयवसमवायिनो गुणविशेषस्य कारणम्, (न) कर्म, (तर्हि) तस्यैवाग्निसंयोगस्य कादाचित्कस्य कारणम् कर्मेति। एवं क्रियावादिनो मतमाशङ्क्योत्तरमाह—न, प्रयत्नादेरित्यादिना। अयमर्थः—कर्मवादिना कर्महेतुत्वाभिमतो यः प्रयत्नादिः तस्यैव तद्धेतुत्वोपपत्तेः (न) कर्मकल्पनायां प्रमाणमस्तीति।

---

१. कर्मणापि तथाभावप्रसंगात्—**क, ख.** कर्मणोऽपि तथा प्रसंगात्—**ग, घ, ङ.**

२. अनवस्थापातात्—**क, ख, ग, घ, ङ.**

३. 'च' नास्ति—**क, ख, ग**; 'तु'—**ङ**

४. 'न' नास्ति—**क, ख.**

५. 'साधन'—नास्ति—**च.**

**तदित्थं यागादिव्यतिरिक्तभावनाभावात्—**

**यागेन भावयेत्स्वर्गमित्यर्थः परिकल्पितः।**
**स्वर्गकामस्य यागे तु नियोगः सम्प्रतीयते ॥ २९ ॥**

**सत्यां [1]हि भावनायां यागस्य करणत्वम्, [2]कर्मापेक्षित्वाच्च**

---

इदानीं भावनानिराकरणस्य फलं दर्शयति—तदित्थं यागादिव्यतिरिक्तभावनाभावात्—

यागेन भावयेत्स्वर्गमित्यर्थः परिकल्पितः[3]।
स्वर्गकामस्य यागे तु नियोगः सम्प्रतीयते ॥ इति ॥

तस्मादेवमुक्तन्यायेन भावनाया यागादिव्यतिरिक्ताया अभावात् यागेन स्वर्गं भावयेदित्येषोऽर्थः पुरुषोत्प्रेक्षामात्रप्रभवः[4], न शब्दार्थः। कस्तर्हि शब्दार्थः? स्वर्गकामस्य यागे तु नियोग इति।

एतदेव प्रपञ्चयति—सत्यां हीत्यादिना। यदि धात्वर्थव्यतिरिक्ता भावना शब्दप्रतिपाद्या विद्यते, तदा तदपेक्षया यागस्य करणत्वम् स्वर्गस्य कर्मत्वं चावधार्येत। कथम्? भावनाया भाव्यापेक्षणीत्वात् या भाव्यं प्रत्यपेक्षा तया हेतुभूतया स्वर्गस्य कर्मत्वावधारणम्। ननु स्वर्गकाम इति पुरुषविशेषणत्वेन निर्दिष्टस्य स्वर्गस्य स्वर्गं कुर्यादिति साध्यत्वेनानिर्दिष्टस्य कथं सत्यामपि भावनायां भाव्यत्वेन सम्बन्ध इत्या-

---

१. 'हि'–नास्ति—**ङ.**
२. करणत्वं कर्मापेक्षायां पुरुष—**ग, घ.** कर्मापेक्षणीयत्वात् यस्यापेक्षायां—**ङ.**
३. कल्प्यते—**छ.**
४. प्रधानो—**च.**

**तस्यापेक्षायां पुरुषविशेषणस्यापि [१] इष्टेः सामर्थ्यात्कर्मत्वमवधार्यते । तदभावे तु मन्दान्विप्रलब्धुमेष [२] परिकल्पननिमित्तो वाक्यार्थो— यागेन भावयेत्स्वर्गमिति[३] । पुरुषविशेषस्य[४] तु नियोगो यागे[५]ऽव-गम्यते ।**

---

शङ्कापाकरणायाह[६]—पुरुषविशेषणस्यापीत्यादिना । पुरुषविशेषणस्यापि इष्टेः इष्यमाणस्य स्वर्गादिः(देः) सामर्थ्यात् वस्तुसामर्थ्यात् इष्टसंयुक्तवाक्यगतेष्टानिष्टपदार्थयोरनन्यार्थत्वाव-गमात्(योरनन्यार्थत्वान्यार्थत्वावगमात् ?) असत्यपि भावनासाध्यताप्रतिपादके शब्दे साध्यत्व-मवधार्यते आख्यातेन प्राधान्येन प्रतिपादितायां भावनायां विद्यमानायाम् । तस्यास्त्व-भावे पूर्वोक्तन्यायबलान्निश्चिते का(मन्दा)न्विप्रलब्धुमेष भवता स्वमनीषिकयोत्प्रेक्ष्य परिकल्पितो वाक्यार्थो—'यागेन भावयेत्स्वर्गम्' इति । एवं श्लोकस्य पूर्वार्धं व्याख्यायोत्तरार्धमधुना व्याचष्टे—पुरुषविशेषस्येत्यादिना । स्वर्गकामनाविशिष्टस्य पुरुषस्य यागे नियोगोऽवगम्यते, न तु स्वर्गसाध्यत्वमित्यर्थः ।

ननु नियोगसामर्थ्यादेव स्वर्गसाध्यत्वं सिध्यति असत्यामपि भावनायाम् । कथम् ? विधिर्हि नियोगः । स च पुरुषप्रेरणात्मकः परम्परयाप्यपुरुषार्थे स्वात्मानमलभमानः स्वविष-यस्य यागादेः पुरुषार्थस्वर्गसाध्यत्वमुपकल्पयति । उक्तं हि—

'विधातुं तमतिक्रम्य स्वर्गादिस्साध्यतेष्यते ।'

इति विध्यधीनं स्वर्गादिसाध्यत्वज्ञानम् ।' विधिवृत्तिविद्भिस्तथा [७]विधिविवेकारम्भेऽप्युक्तम्—

---

१. इष्टस्य—**क. ख** ; स्वर्गस्येष्टस्य—**ग, घ, ङ.**

२. कल्पोऽपरिमितो—**क.** कल्पोऽपरिचितो—**ख.**

३. 'इति'—नास्ति—**ग, घ, ङ.**

४. तु—नास्ति—**क, ग, घ, ङ.**

५. यागे गम्यते—**ग, घ, ङ.**

६. पहरणायाह—**च.**

७. 'विधि'—नास्ति—**च.**

'साधने पुरुषार्थस्य सङ्गिरन्ते त्रयीविदः ।
बोधं [1]विधिसमायत्तमतः स प्रविविच्यते ॥' इति ॥

अत्रोच्यते—सत्यं विधिनिबन्धनं पुरुषार्थसाध्यत्वज्ञानम्; विधिरेव तु भावनाया अभावे न सिध्यति, तस्य [2]सविषयत्वात्, अभावार्थस्य च विषयत्वानुपपत्तेः । अतो विधि-स्वरूपलाभाय भावना अपेक्षिता ॥

नन्वेवन्तर्हि भावनाया भाव्यापेक्षिणीत्वं स्वर्गसाध्यत्वसिद्धौ हेतुत्वेनोक्तं विरुध्येत, तस्या विध्यधीनत्वात्। नैतदेवम्, सामान्यविशेषभेदेन व्यवस्थोपपत्तेः। साध्यसामान्य[3]-सिद्धिर्हि भावनाधीना, पुरुषार्थरूपसाध्यविशेषसिद्धिर्विधिनिबन्धना। भावना हि भाव्यमात्र-मपेक्षते नैकान्ततः पुरुषार्थमेव, विधिसम्बन्धात्तु पुरुषार्थरूपे भाव्यविशेषे नियम्यते। तथा आह—

'विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते।' इति ॥

नन्वेवन्तर्हि साध्यविशेषसिद्धिहेतुर्विधिरेव सामान्यसिद्धिमाक्षिपति, सामान्यसिद्धि-मन्तरेण विशेषसिद्ध्यनुपपत्तेः। अतो नार्थो भावनया। न; उक्तोत्तरत्वात्। उक्तं हि—विधेस्स्व-रूपमेव भावनापेक्षमिति ॥ यच्च भावनाकांक्षानिबन्धनं स्वर्गादिसाध्यत्वज्ञानमुक्तम् तद्भावनायाः प्राधान्यमङ्गीकृत्योक्तम्—प्रधानाकांक्षावशवर्ती हि पदार्थान्तरसम्बन्ध इति। अपि च, प्रेषणाध्येषणानुमोदनेष्टसाधनताप्रभेदः पुरुषप्रेरणात्मको विधिर्लोके लिङाद्यर्थस्समधिगतः। स एव वेदेऽपि तदर्थो ग्राह्यः, नान्यः। तत्र तावच्छ्रेयस्साधनतालक्षणो विशेषो नासत्यां भावनायां संभवति। नहि साधनं (श्रेयस्साधनं) [4]साधनं विना सिध्यति। [5]साधनं च भावना। अतो भावनाया अभावे श्रेयस्साधनरूपस्य विधेरसंभवात् प्रैषादयः परिशिष्यन्ते।

---

१. विधौ—छ.
२. स्वविषय—च.
३. सामग्री—च.
४. साधनां—छ.
५. साधना—छ.

**[1]तस्मिंस्त्वनुष्ठिते स्वर्गादिफलं स्वतोऽन्यतो वा कुतश्चिद्भविष्यति, [2]नैव वा; [3]नत्वयमर्थः शक्योऽभ्युपगन्तुम् ।**

**ननु पुरुषविशेषण[4]मप्येतन्न सम्भवति, अयोगान्ययोगात्य-**

---

ते च पुरुषधर्मा वेदस्यार्थवत्त्वेन (वेदार्थत्वेन) परिगृह्यमाणाः पौरुषेयत्वं बलादापादयन्ति । तत्र वेदस्य प्रामाण्यमेवास्तमियात्, कुतः स्वर्गादिसाध्यत्वसिद्धिरित्यलमतिप्रसङ्गेन ॥

प्रकृतमनुसरामः । ननु असति स्वर्गस्य यागसाध्यत्वे [illegible] विरुध्येतेत्याशङ्क्याह—तस्मिंस्त्वनुष्ठित इति । तस्मिन् यागेऽनुष्ठिते स्वर्गादिफलं स्वत एव विना कारणेन भविष्यतीति गृह्यताम् । ननु कादाचित्कस्य अकारणि(ण)कस्योत्पत्तिरनुपपन्नेत्याशङ्कामपनेतुमाह—अन्यतो वा कुतश्चिदिति । अन्यतो वा यागव्यतिरिक्तात् कुतश्चित्कारणाद्भविष्यतीति कल्प्यतामिति । अन्यदपि कारणं नोपलभ्यते । अकारणञ्च कार्यजन्म न संभवति । तत्र स्वर्गस्य यागसाध्यत्वाभावे जन्मैव न संभवतीत्याशङ्क्याह—नैवेति । नैव वा भविष्यति [5]स्वर्गादिः, नत्वनवगम्यमानो यागेन भावयेत्स्वर्गमित्येषोऽर्थः शक्योऽभ्युपगन्तुमिति ।

तत्र भावनावादी चोदयति—नन्विति । एतत्स्वर्गकामत्वं पुरुषविशेषणमपि न संभवति । कुतः? व्यवच्छेदफलं हि विशेषणम् । व्यवच्छेदश्च त्रिविधः व्यवच्छेद्यभेदात्—अयोगव्यवच्छेदोऽत्यन्तायोगव्यवच्छेदोऽन्ययोगव्यवच्छेदश्चेति । एषामन्यतमः स्वर्गकामत्वविशेषणफलत्वेनाभ्युपगन्तव्यः; स्वर्गः काम्य एव भवति नाकाम्य इत्ययोगव्यवच्छेदः, स्वर्गः काम्यो [6]भवत्येव न (न) भवतीत्यत्यन्तायोगव्यवच्छेदः, स्वर्ग एव काम्यो नान्य इत्यन्ययोगव्यवच्छेदः । एषामन्यतमोऽप्यत्र न भवति । कथम्? यदि तावदिहायोगव्यवच्छेद आश्रीयते

---

१. तस्मिंश्चानु—क, ग; घ, ङ.
२. नैव वायमर्थः—ङ.
३. नत्वनर्थः शक्योऽवगन्तुम्—ख.
४. मेव न—क, ग, घ, ङ.
५. स्वर्गादि—छ.
६. एव भवति न न भवती—च.

**न्तायोगानामन्यतमस्यापि[1] व्यवच्छेदासंभवात्। जात्या च [2]तस्याभावात्।**

**साध्यत्वमपि [3]तर्ह्यनुपपन्नम्, स्वर्गस्य तथा अनिर्देशात्,**

---

स्वर्गः काम्य एवास्य भवति नाकाम्यः कदाचिदित्येवं रूपः, सोऽत्र न संभवति, ईदृशस्य कस्यचिदसम्भवात्। न [4]हि कश्चिदपि सदा स्वर्गं कामयतेऽनुष्ठाता, सुषुप्त्याद्यवस्थासु कामनानुपपत्तेः। नाप्यन्ययोगव्यवच्छेदः संभवति। नहि कस्यचित्पुरुषस्य स्वर्ग एव कामना नियतो(ता) भवति, अन्नपानादिविषयान्तरकामनाया अप्यवश्यंभावित्वात्। नाप्यत्यन्तायोगव्यवच्छेदस्संभवति, अत्यन्तायोगस्यात्यन्तमप्राप्तत्वात्। नहि कस्यचिदपि स्वर्गकामनया अत्यन्तमयोगस्संभवति। सर्वो हि जन्ममरणान्तराले कदाचित्स्वर्गादि कामयत एवेति। अतः पुरुषविशेषणत्वमपि स्वर्गकामत्वं(त्वे) न सम्भवति। ननु स्वर्गकामत्वं नाम जातिरस्ति ब्राह्मण्यादिवत्। अतस्तस्य विशेषणत्वे नोक्तदोष इत्याशङ्क्याह—जात्या चेत्यादि। कामनायोगनिमित्त(त्ता)स्य शब्दस्य पुरुषेषु वृत्तिः। न स्वर्गकामत्वं नाम जातिरस्तीत्यर्थः।

एवं भावनावादिना चोदिते पुरुषविशेषणत्ववादी प्रतिवक्ति—साध्यत्वमित्यादिना। तवत्पक्षेऽप्यनुपपत्तिः समाना, यतः साध्यत्वमपि स्वर्गस्य न सिध्यति। कुत इति चेत्, तत्राह—तथा अनिर्देशादिति। स्वर्गमिति साध्यत्वेन निर्देशाभावादित्यर्थः। ननु साध्यत्वेन निर्देशाभावेऽपि सामर्थ्यात्स्वर्गस्य भावनायां भाव्यत्वेन संबन्धः सिध्यतीत्याशङ्क्याह—विशेषणस्यैव चार्थात् (भावना)संबन्धाभ्युपगमादिति। अयमर्थः—पुरुषविशेषणस्य[5] सतः स्वर्गकामपदार्थस्यार्थाद्भावनासम्बन्धोऽभ्युपगम्यते नाविशेषणस्य। विशेषणत्वं च भव[6]तैवापा-

---

१. तस्यापि—ख.
२. तत्स्वाभाव्यात्—ख.
३. तस्यानुप—ख.
४. 'हि'—नास्ति—च.
५. स्यैव सतः—छ.
६. तैवोपाकृतम्—छ.

**विशेषणस्यैव [१]चार्थाद्भावनासम्बन्धाभ्युपगमात् । वर्तमानेच्छाविशेषणत्वमितरस्याप्यविरुद्धम् ।**

**न, फलनिमित्तयोरन्यतरापत्तेः । निमित्तत्वे च यावज्जीव[२]श्रुत्युपसंहारे तदानर्थक्यम्[३], अनुपसंहारे त्वेतस्याः ।**

---

कृतम् । तत्र कथं स्वर्गस्य साध्यत्वसिद्धिरिति । यस्य स्वर्गे कामना वर्तते स स्वर्गकामः इति वर्तमानायाः स्वर्गेच्छाया विशेषणत्वे न कश्चिद्विरोधः । अतो विशेषणस्यैव [४]सतोऽर्थाद्भावनासम्बन्धः सिध्यतीत्याशङ्क्याह—वर्तमानेच्छेत्यादि । इतरस्य नियोगवादिनः पक्षेऽपि यदास्य स्वर्गकामना वर्तते तदा नियोग इत्यविरुद्ध एष निर्वाह इत्यर्थः ।

एवमुभयोरपि पक्षयोः समानौ चोद्यपरिहाराविति नियोगवादिनोक्ते पुनर्भावनावादी विशेषविवक्षया आह—न, फलनिमित्तयोरित्यादिना । (न) वर्तमानेच्छाविशेषणत्वं भवत्पक्षेऽवकल्पते । कथम्? फलनिमित्तयोरन्यतरापत्तेः । तथाहि—यदिदं काम्यमानं स्वर्गादि पुरुषविशेषणभूतम् तेन फलेन वा निमित्तेन वा अन्यतरेण भवितव्यम् । दृश्यते हि द्वय्यपीयं गतिः नियोज्यविशेषणस्य, यथा—'आरोग्यकामो मितमश्नीयात्' इत्यादावारोग्यस्य फलत्वम्; यथा च—गृहदाहादेः क्षामवत्यादौ निमित्तत्वम् । न चैवंजातीयकविशेषणस्यान्या गतिरुपलभ्यते । तत्र तावत्स्वर्गादेः फलत्वं भवता नाभ्युपगम्यते । मा भूत्फलत्वम्, निमित्तत्वे को विरोधः इत्याशङ्क्याह—निमित्तत्वे चेत्यादि । अयमर्थः—अस्ति तावत् 'यावज्जीवमग्निहोत्रं जुहुयात्', यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्येवमाद्या जीवननिमित्ता श्रुतिः, तस्य(स्याः) स्वर्गकामनयोपसंहारो वा स्यात् अनुपसंहारो वा । उपसंहारपक्षे तदानर्थक्यम्, [ए]तस्या जीवनश्रुतेरानर्थक्यम् । कथम्? एवं हि तदा अर्थस्स्यात्—स्वर्गकामस्सन् यदा जीवति तदा यजेतेति । तत्र कामश्रुत्यैव जीवनमर्थाक्षिप्तं प्रतीयते, जीवत

---

१. 'च'—नास्ति—ख. स्यैवार्था भावना—ङ.
२. श्रुत्यासंहारे—ख.
३. —र्थक्यम्, संहारे विशेषणश्रुतेरेतस्याः—ख.
४. सतो—च.

**स्यात्तावदेष नित्येषु परिहारो [1]नानित्येषु । [2]अपि चानर्थक्यं स्यादित्यनर्थो नावगन्तुं शक्यत इत्युक्तम् । पुनरुपदेशाद्वा स्वर्गकामः पुनः प्रयोक्ष्यत इति नानर्थक्यम् ।**

---

एव कामनोपपत्तेः । अतो जीवनश्रुतिरनर्थिकैव स्यात् । अनुपसंहारपक्षे दूषणमाह— अनुपसंहारे (तु) [3]एतस्या इति । अनुपसंहारपक्षे [4]एतस्याः कामश्रुतेः । आनर्थक्यमित्यनुषज्यते । कथं पुनरनुपसंहारे कामश्रुतेरानर्थक्यम् ? । उच्यते । एवं हि तदा अर्थस्स्यात्— स्वर्गकामो [5]यजेत जीवन्यजेत इति । तत्र जीवनश्रुत्या सामान्यप्रवृत्तया कामिनोऽप्युपसङ्ग्रहात् तस्यापि तथैव प्रवृत्तिसिद्धेः किं कामश्रुत्या प्रयोजनम् ।

एवं भावनावादिना स्वर्गकामनाया निमित्तत्वे निराकृते पुनरपि पुरुषनियोगवाद्याह— स्यात्तावदित्यादि । एष कामनाया निमित्तत्वस्य परिहारो निराकरणम् नित्येष्वेव स्यात् , येष्वग्निहोत्रदर्शपूर्णमासादिष्वन्यया नित्यत्वं श्रुत्या प्राप्तम् । येषु त्वन्या नित्यत्वप्रापिका श्रुतिर्नास्ति पशुकामग्रामकामादिनिमित्तसम्बन्धिषु कर्मसु, तत्रैष परिहारो नावकाशं लभते । नहि तत्र जीवनश्रुत्युपसंहारानुपसंहारविकल्पोऽवसरी । तस्मान्न सार्वत्रिकोऽयं परिहार इति । ननु मा भूदनित्येष्वेष परिहारः, नित्येषु तु पूर्वोक्तेन न्यायेन निमित्तपक्षे श्रुतेरानर्थक्यं भवत्येव । अतः काम्यश्रुतयो भाव्यविशेषसमर्पणपरा एव भवितुमर्हन्तीत्याशङ्क्याह— अपि चेति । आनर्थक्यं भवतीत्येतावता नाप्रतीयमानोऽर्थोऽभ्युपगन्तुं शक्यते । नहि स्वर्गकामपदस्य स्वर्गस्य भाव्यत्वाभिधाने सामर्थ्यमस्ति । नाप्यर्थात्तस्य भाव्यत्वसिद्धिः अप्रसिद्धायां भावनायां सम्भवति । तत्प्रसिद्धिश्च पुरस्तान्निरस्ता । अतो [6]भवत्वानर्थक्यं कामश्रुतेः । किं कुर्मः ? नैतावता अनवगम्यमानोऽर्थोऽवगम्यत इति शक्यते वक्तुमिति । इदानीमानर्थक्यपरिहारोऽपि कथञ्चिच्छक्यत इत्याह—पुनरुपदेशेत्यादि । यावज्जीव-

---

१. न काम्येषु—क, ख.

२. अपि च नानर्थक्यमित्यर्थः शक्योऽवगन्तुमित्युक्तम्—क, ख. अपि चानर्थक्यमित्यर्थो नावगन्तुं शक्यते इत्युक्तम्—ङ.

३. एकस्या—च.

४. एकस्याः—च.

५. 'यजेत'–नास्ति—छ.

६. भावनानर्थक्यं—च.

**[१]बुद्ध्वैतदेवं भगवान्ददर्श खलु बादरिः ।**
**न द्रव्यगुणसंस्कारव्यतिरिक्तेऽस्ति शेषता ॥ २६ ॥**

**द्रव्यगुणयोः [२]खलु योग्यता। अतः कारकविभक्तितो वा**

---

श्रुत्यैव स्वर्गकामस्याप्यनुष्ठाने प्राप्ते स्वर्गकामो यजेतेति पुनरुपदेशसामर्थ्यात्स्वर्गकामः पुनरपि य? (प्रयो)क्ष्यत इति स्वर्गकामस्य पुनःप्रयोगप्रापणपरौः कामश्रुतयोऽर्थवत्य एवेत्यनवद्यम् ।

प्रतिपादितमर्थं बादर्याचार्यमतानुसारेण द्रढयन्नाह—

बुद्ध्वैतदेवं भगवान्ददर्श खलु बादरिः ।
न द्रव्यगुणसंस्कारव्यतिरिक्तेऽस्ति शेषता ॥ इति) ॥

एतद्भावनाया निष्प्रमाणकत्वं ज्ञात्वा भगवान्बादरिः द्रव्यगुणसंस्कारेभ्यो व्यतिरिक्ते शेषता नास्तीति मेने । द्रव्यं व्रीह्यादि, गुणोऽरुणिमादिः संस्कारोऽवघातादिः[३] तेष्वेव यागादि(याग)[४]क्रयणादिकायां क्रियायां शेषभावः । यत्तु तेभ्यो व्यतिरिक्तं यागः, फलं, पुरुषश्चेति त्रयम् तत्र शेषभावो नास्ति—न यागस्य फलशेषभावः, नापि फलस्य पुरुषशेषभावः, नापि पुरुषस्य व्रीह्यादिद्रव्यवैलक्षण्येन फलस्वामितया कर्मणि शेषभाव इति ।

एतदेव विवृणोति—द्रव्यगुणयोरित्यादिना । द्रव्यं व्रीह्यादि, गुणोऽरुणिमादिः, तयोः क्रियायां यागक्रयणादिकायां शेषभावोऽवगम्यत इति व्यवहितेन संबन्धः। तयोः शेषभावः योग्यत्वात्कारकविभक्तितो वेति हेतुद्वयं विकल्पेनोक्तम् । तत्र योग्यत्वमिति सामर्थ्यमुच्यते । अस्ति हि सामर्थ्यं द्रव्यगुणयोः सिद्धस्वभावत्वात्साध्यस्वभावां क्रियां निर्वर्तयितुम् । अतः क्रियानिर्वर्तनसामर्थ्याद्द्रव्यगुणयोः क्रियां प्रति शेषभावोऽवगम्यते । कारकविभक्तिरिति करण-

---

१. बुद्ध्वेदमेव—**ख.**
२. खलु नित्ययोर्योगः, ततः—**क, ख.**
३. तादियस्तेष्वेव—**छ.**
४. क्रियणादि—**च.**

**क्रियायां शेषभावोऽवगम्यते[१] । संस्कारोऽपि सम्मार्गादिः [२]शब्दतो वस्तुतो वा कर्मसम्बन्धी, तत्र [३]आपन्नशेषत्वः तन्मुखेन [४]क्रियायां शेषभावं यायात् ।**

---

विभक्तिस्तृतीयेह गृह्यते । श्रूयते हि सा 'व्रीहिभिर्यजेत', 'अरुणया क्रीणाति' इति । सा च प्रातिपदिकार्थस्य साधकतमत्वमभिदधाना क्रियां प्रति शेषभावमवगमयतीति । भवत्वेवं द्रव्यगुणयोः शेषभावावगमः, संस्कारस्य कथमित्यत आह—संस्कारोऽपीत्यादि । यस्तु सम्मार्गावघातादिस्संस्कारः सोऽपि क्रियायां शेषभावं यायादिति सम्बन्धः, तत्र हेत्वपेक्षायामुक्तम्—कर्मसम्बन्धीति । यतोऽसौ संस्कारोऽवघातादिः व्रीह्यादिकर्मसम्बन्धीति । अस्य कर्मसम्बन्धे हेतुद्वयं विकल्पेनोक्तम्—शब्दतो वस्तुतो वेति । द्वितीयाविभक्तिरिह शब्द इत्युच्यते । श्रूयते हि सा 'ग्रहं सम्मार्ष्टि' 'व्रीहीनवहन्ति' इति । सा च प्रतिपदिकार्थस्येप्सिततमत्वं प्रकाशयन्ती क्रियां प्रति प्राधान्यं गमयति । वस्तुत इति—वस्तुस्वभावादित्यर्थः । सकर्मकोऽयमवघातादिः संस्कारः, सकर्मकस्य च कर्मनिष्ठतास्वभावः, अतो वस्तुस्वभावादपि [५]स कर्मसम्बन्धी । भवतु संस्कार्येण व्रीह्यादिना संस्कारस्यावघातादेः सम्बन्धः । कथमेतावता यागादिक्रियाशेषभाव इत्यपेक्षायामुक्तम्—तत्रेत्यादि । व्रीह्यादिसंस्कार्यद्रव्यशेषभूतोऽवघातादिः [६]संस्कारः, तन्मुखेन—प्रधानभूतव्रीह्यादिमुखेन—क्रियाशेषभावः(वं) प्रतिपद्यत इति संस्कारविशिष्टस्य व्रीह्यादेर्यागादिक्रियाशेषभावः । नच विशेषणस्य संस्कारस्य शेषभावमन्तरेण तद्विशिष्टस्य शेषभाव उपपद्यत इति ।

---

१. भावो गम्यते—**ग, घ, ङ.**

२. शब्दतो वा—**घ.**

३. आपन्नशेषत्वं—**क.** प्रतिपन्नशेषत्वं—**ग, घ, ङ.**

४. क्रियां यायात्—**ग, घ, ङ.**

५. 'स'–नास्ति—**च.**

६. संस्कारः तज्ज्ञापनप्रधानभूतव्रीह्यादिव्रीह्याभिख्येन क्रियाशेषभावं प्रतिपद्यतइतिसंस्कार विशिष्टस्य व्रीह्यादेः यागादिक्रियाहेतुभू ... ... ... नच विशेषणस्य—**छ.**

**[१]यागस्तु प्रकृत्या [२]अकर्मको देवताकर्मको वा कथं स्वर्गेण सम्बध्येत? भावनाकर्मणा[३] तेन तद्व्यवहितः संबध्येत। सा च नास्तीति [४]मन्यमानो भगवान्बादरिर्द्रव्यगुणसंस्कारेष्वेव[५] शेषभाव इति मेने—इति [६]पूर्वः पक्षः ॥**

---

एवं द्रव्यगुणसंस्काराणां शेषभावमुपपाद्येदानीं व्यतिरिक्ते शेषता नास्तीत्युक्तमुपपादयितुमाह—यागस्त्वित्यादि । यागस्तु न कथञ्चिदपि स्वर्गेण सम्बध्येत । कथम्? न तावच्छब्दतोऽवगम्यते सम्बन्धः; तत्प्रतिपादकशब्दाभावात् । नापि वस्तुतः, यतः स्वभावेनाकर्मको यागो द्रव्यत्यागसङ्कल्परूपः, देवताकर्मको वा देवपूजालक्षणत्वात् । [७]सर्वथापि न स्वर्गकर्मकः । अतो वस्तुतोऽपि न यागः स्वर्गेण [८]सम्बध्यते । एतेन फलपुरुषयोरपि शेषभावो निरस्तः, यागसाध्य[९]स्वर्गभावा(वना)सम्भवापेक्षत्वात्तस्येति । ननु सत्यामपि भावनायां भावनैव स्वर्गेण सम्बध्यते न यागः । तत्र किमिदमुच्यते बुद्ध्वैतदेवमि(ती)त्याशङ्क्याह—(भावनाकर्मणा इत्यादि । अयं भावः—) यदि तु भावना भवेत् तदा तदाकाङ्क्षावशात्स्वर्गस्य भाव्यत्वमवगम्यते । ततश्च भावनाकर्मणा सता स्वर्गेण भावनाव्यवहितो यागः सम्बध्येत । यद्यपि साक्षान्न सम्बध्यते तथापि भावनायां करणत्वेन तद्व्यवहितः स्वर्गेणापि सम्बध्यते, सा च भावना पूर्वोक्तेन न्यायेन नास्तीति भगवान्बादरिः द्रव्यगुणसंस्कारेष्वेव शेषभाव इति मेने इति । उक्तं हि—'द्रव्यगुणसंस्कारेषु बादरिः' इति ॥

इति भावनाविवेकटीकायां **नारायण**विरचितायां[१०] विषमग्रन्थ(न्थि)भेदिकाख्यायां पूर्वपक्षप्रकरणं समाप्तम् ॥

---

१. यागादिस्तु—**ग, घ, ङ.**
२. अकर्मा—**ख.**
३. 'तु'-अधिकं वर्तते—**क, ख.**
४. मन्यमानो बादरिराचार्यो—**क, ख.** गम्यमानो भगवान्—**घ, ङ.**
५. शेषभावं मेने—**ग, घ, ङ.**
६. 'पूर्वः पक्षः' नास्ति—**ग, घ, ङ.**
७. सर्वदा—**च.**
८. संबध्येत—**छ.**
९. स्वर्गभावात् भावापेक्षत्वात्तस्येति—**छ.**
१०. विरचितायां पूर्वपक्षः समाप्तः ।—**छ.**

[1]अत्रोच्यते—

**अनेकार्थत्वमन्याय्यं तेनैकाधिकरण्यतः।**
**करोतिना तिङन्तेषु [2]भावभेदोऽनुमीयते ॥ २७ ॥**

[3]इदानीं सिद्धान्तवादी धात्वर्थातिरिक्तां भावनां सत्तया शब्दार्थतया च समर्थयितुमुपक्रमते। अत्रोच्यते—

अनेकार्थत्वमन्याय्यं तेनैकाधिकरण्यतः।
करोतिना तिङन्तेषु भावभेदोऽनुमीयते ॥ (इति) ॥

अयमर्थः—पचत्यादिपदेषु भावनाभेदोऽभिधेयोऽनुमीयते। कुतो हेतोः? ऐकाधिकरण्यतः—करोतिना तिङन्तानां पचत्यादीनां 'किं करोति—पचति' इत्येवंरूपात्। ननु धात्वर्थसामान्यवचनत्वात्करोतेः तत्सामानाधिकरण्यात्पचत्यादीनां न भावनाविशेषार्थत्वमनुमातुं शक्यते इत्याशङ्कानिराकरणायोक्तं—अनेकार्थत्वमन्याय्यम्—इति। एकस्य शब्दस्यानेकार्थत्वं न न्याय्यम्। अस्य च करोतेः क्वचिच्च प्रयोगे [4]भावनार्थत्वं निश्चितम्। अतः सामानाधिकरण्येऽपि प्रयोगे तादर्थ्यमेव ग्राह्यम्, अन्यथा अनेकार्थत्वस्यान्याय्यस्य प्रसङ्गादिति श्लोकस्यार्थः।

ननु अनिश्चितस्वरूपाया भावनायाः कथं शब्दार्थत्वं साध्यते? नह्यप्रसिद्धे धर्मिणि धर्मश्चिन्तामर्हति। अथोच्येत स्वरूपसद्भाव एवेह साध्यत इति, तदसत्; स्वरूपसद्भावहेतोरिहानुपन्यासात्, उपन्यस्तस्य चाहेतुत्वात्। नहि करोतिसामानाधिकरण्यं भावनास्वरूपेण व्याप्तं दृष्टम्, येन तत्साधकं स्यात्। अथ मतं [5]घटं करोतीत्येवमादौ प्रयोगे धात्वर्थ-

१. 'अत्र' नास्ति—क.
२. भावाभेदो—ग, घ.
३. 'सिद्धान्त आरभ्यते' इत्यधिकं वर्तते—च.
४. भावनात्वं—च.
५. घटः—च.

सामान्यव्यतिरिक्तेन केनचिदर्थेन भवितव्यम्, स भावनेत्यनेन प्रकारेण भावनास्वरूपमपि प्रसाध्य ततः करोतिसामानाधिकरण्यात् तिङन्तानामपि भावनार्थत्वं साध्यत इति। एतदप्यसारम्, यतः प्रमाणान्तरेणावगतेऽर्थे शब्दः प्रयुज्यते, न शब्दप्रयोगादेव तत्स्वरूपसिद्धिः। अतः प्रमाणान्तरमन्तरेण करोतिशब्दव्यवहारमात्रेण तदर्थतया भावना न [1]सिध्यति। व्यवहारमूलत्वेन तद्गोचरे प्रमाणान्तरं [2]कल्प्यते इति चेत्—मैवम्। तत्प्रमाणान्तरं कल्प्यमानं विशेषतो निरूप्यते वा? न वा? न चेत्, असदेव स्यात्। निरूप्यते चेत्, तदेव वाच्यम्। न चोच्यते। तस्मात् किमत्र क्रियते इति न ज्ञायते। अत्रोच्यते। भावनास्वरूपसद्भावं वक्ष्यमाणेन न्यायेनाङ्गीकृत्य करोतेर्धात्वर्थसामान्यार्थतानिरासेन भावनार्थत्वमुपपाद्य पुनस्तत्सामानाधिकरण्यात्पचत्यादीनामपि भावनाविशेषवचनत्वं साध्यत इति।

नन्वेवन्तर्हि स्वरूपसद्भावप्रतिपादनमेव प्रथममस्तु, पश्चाच्छब्दार्थताप्रतिपादनम्। न। प्राधान्यात्। आख्यातप्रत्ययाभिधेयता हि भावनायाः प्राधान्येनास्मिन्प्रकरणे विवक्षिता, तच्छेषतया तु स्वरूपसद्भावः। नहि सा सत्तामात्रेण फलवती, किन्त्वाख्यातप्रत्ययेनाभिहिता स्वर्गादिसाध्यत्वसिद्धिहेतुतया। स चायमभिप्रायः स्वयमेवाचार्येण विवरिष्यते—'तदेवं भावनार्थत्वादाख्यातप्रत्ययस्य' इत्यादौ। तस्माद्भावनायाः शब्दार्थ(त्वमस्मिन्) प्रकरणे प्रतिपाद्यते, पश्चात्स्वरूपसद्भाव इति सर्वमुपपन्नम्॥

ननूपरिष्टादपि भावनायाः प्रत्ययार्थत्वेऽपि हेतुर्वक्ष्यते न केवले सद्भावे। सत्यम्, उभयोरपि सद्भावशब्दार्थत्वयोर्वक्तव्ययोः प्रथमं शब्दार्थतानिरूपणेन सिद्धान्तोपक्रमस्यायमभिप्रायो वर्णित इत्यदोषः।

इदानीं श्लोकस्यार्थमाविष्कर्तुकाम आह—[3]घटं करोतीत्यत्र तावज्ज[4]ननोत्पादनादि-

१. सिद्ध्यतीति—**च**.
२. 'कल्प्यते' इत्यारभ्य 'तत्प्रमाणान्तरम्' इत्यन्तो ग्रन्थो नास्ति 'च' मातृकायाम्।
३. 'किं' अधिकं वर्तते—**च** मातृकायाम्.
४. नोत्पादश्रुति—**च**.

**घटं करोतीत्यत्र [1]तावज्जननोत्पादनादिश्रुतिविषयां भावनां करोतिराचष्टे। स च पचत्यादिसमानाधिकरणोऽपि नान्यत्र वर्तितुमर्हति। अनेकार्थत्वे[2]ऽप्यनैकान्तिकत्वात् ततोऽभिधेय[3]निश्चया-**

श्रुतिविषयां भावनां करोतिराचष्टे इति। अयमर्थः—घटं करोतीत्येवंजातीयके प्रयोगे तावत्करोतेर्भावनार्थ[4]त्वमवश्याभ्युपगन्तव्यम्। आस्तामन्यत्र। तत्र हेत्वपेक्षायामुक्तम्—जननोत्पादनादिश्रुतिविषयामिति। हेतुगर्भं विशेषणम्। जननोत्पादनादयः शब्दाः भवितुः प्रयोजकव्यापारवचनतया भावनावचनाः समधिगताः भावनाशब्दवत्। तैश्च समानार्थः करोतिः प्रयुज्यमानो दृश्यते, घटं करोति घटमुत्पादयतीत्येकार्थताप्रतीतेः। यदि पुनः घटं करोतीत्यत्रापि करोतिर्भावनां विहाय धात्वर्थमा(त्रमा)चक्षीत तदा तदर्थस्य घटेन साध्यतयोपात्तेनान्वयो न घटेत, धात्वर्थसामान्यस्य साध्यानपेक्षत्वात्, विशेषापेक्षत्वात्, घटस्य च तद्विशेषत्वाभावात् साध्यतया भेदनिर्देशाच्च तद्विषय(शेष)तयाप्यन्वयायोगात्। यदा पुनर्भावना तत्र करोतेरर्थः स्यात् तदा तस्या भाव्यापेक्षणीत्वस्वाभाव्येन घटेन सम्बन्धो घटनामुपैति 'घटं करोति' इति। अतो यद्यपि पचत्यादिसमानाधिकरणप्रयोगे करोतेर्धात्वर्थसामान्यार्थत्वेऽपि न कश्चिद्विरोधः, 'घटं करोति' इत्यादौ त्ववश्यं भावनार्थत्वमभ्युपगन्तव्यमिति। अस्तु तर्हि तत्र करोतिर्भावनावचनः, पचत्यादिसमानाधिकरणस्तु धात्वर्थसामान्यवचनः स्यात् इत्याशङ्क्याह—स च पचत्यादिसमानाधिकरणोऽपि नान्यत्र वर्तितुमर्हतीति। स च करोतिर्भावनायां दृष्टप्रयोगः पचत्यादिसमानाधिकरणतया प्रयुज्यमानोऽपि नान्यत्र भावनाया वर्तितुमर्हति किन्तु भावनायामेवेति। तत्र हेतुमाह—अनेकार्थत्वे[5]ऽप्यनैकान्तिकत्वात्ततोऽभिधेयनिश्चयायोगादप्यव्यवहारापत्तेरिति। यदि च पचत्यादिसमानाधिकरणः

१. तावद्घटोत्पादनादि—क, ख.

२. त्वेऽनैका—क; त्वे त्वनैका—ग; त्वे ह्यनैका—ङ.

३. निश्चयायोगादव्यव—क, ख, ग; निश्चयायोगात्तदव्यव—घ.

४. त्वमस्यमवश्या—च.

५. 'त्वेऽपीति।' अनैकान्तिकत्वात्ततो—च.

**योगादप्यव्यवहारापत्तेः। [१]परिगतसामर्थ्यानुसारेण च प्रयोगोपपत्तौ सामर्थ्यान्तरपरिकल्पनायोगात्, प्रतीतबाधादप्रतीतकल्प-**

---

करोतिर्न भावनायाम्, अनेकार्थत्वं हि तदा अस्य स्यात्। एकार्थं प्रति नियमाभावात् [२]ततः शब्दात् [३]अर्थविशेषनिश्चयानुपपत्तेः शब्दनिबन्धनो व्यवहारो न स्यात्।

नन्वक्षादिशब्दानामनेकार्थानामपि सतां प्रकरणादिवशादर्थविशेषनिश्चयहेतुत्वेन व्यवहाराङ्गत्वं दृश्यते। तत्र किमिदमुच्यते अनेकार्थत्वमन्याय्यमि(ति इ)त्याशङ्क्याह— परिगतसामर्थ्यानुसारेण च प्रयोगोपपत्तौ सामर्थ्यान्तरपरिकल्पनायोगादिति। यस्याक्षादेः शब्दस्यैकयैव शक्त्या प्रयोगोपपत्तिर्नास्ति तस्य शक्तिभेदकल्पनया[४] अनेकार्थत्वमपीष्यत एव। यस्य पुनश्शब्दस्य क्वचित्परिगतेनैव सामर्थ्येनान्यत्रापि प्रयोगोपपत्तिः तस्य न सामर्थ्यान्तरं कल्पयितुं शक्यते, प्रमाणाभावात्। कार्यानुपपत्तिः सामर्थ्यकल्पनाया बीजम्। सा चान्यथाप्युपपत्तौ[५] सत्यां नास्तीति। न केवलं प्रमाणाभावादेव सामर्थ्यान्तरपरिकल्पनायोगः, किन्तु प्रमाणविरोधादपीत्याह—प्रतीतबाधादप्रतीतकल्पनाच्चेति। सामर्थ्यान्तरपरिकल्पने हि पूर्वप्रतीतं सामर्थ्यं बाध्येत, अप्रतीतं चान्यत्कल्प्येत। अर्थविशेषनियतं सामर्थ्यं शब्दस्य पूर्वं प्रतीतं अस्य शब्दस्यायमेवार्थ इति। तस्य चैवं सति बाधः [६]कियानपि भवेदेव।

ननु कथं प्रतीतबाधः? यावता प्रयोगान्तरे प्रतीतमेकं सामर्थ्यं (अपरित्यज्यैव) प्रयोगान्तरे चार्थान्तरे सामर्थ्यान्तरं कल्प्यते। अतो यत्र सामर्थ्यान्तरं कल्प्यते न तत्र प्राचीन-

---

१. अवगतसामर्थ्या—**ग**, **घ**; परिगृहीतसामर्थ्या—**ङ**.

२. 'क्वचिद्भावनार्थत्वं क्वचिदन्यार्थत्वमित्यनेकार्थत्वे च सति अनैकान्तिकत्वात् एकार्थं प्रति नियमाभावात्' इति अधिकं वर्तते—**छ**. मातृकायाम्।

३. अर्थविशेषानुपपत्तेः—**छ**.

४. कल्पनाया—**च**.

५. अन्यथानुपपत्तौ—**च**.

६. क्रिया न विभवेदेव—च.

**नाच[1], प्रयोगान्तरेऽपि प्रयोगान्तरनिर्ज्ञातस्यैव प्रत्ययात्। किं करोतीति [2]चोत्पादनाया एवाधिगमात्। एवं भावनाभिधानेन करोतिना समानाधिकरणतया आख्यातपदानां तद्विशेषाभिधायित्वमनुमीयते।**

---

प्रयोगावगतसामर्थ्यप्रतीतिरिति न प्रतीति(त)बाध इत्याशङ्क्याह—प्रयोगान्तरेऽपि प्रयोगान्तरनिर्ज्ञातस्यैव प्रत्ययादिति। क्वचित्प्रयोगे योऽर्थो निर्ज्ञातो यस्य गवादेश्शब्दस्य, तस्य स एव प्रयोगान्तरेऽपि सास्नादिमदादिरूपः प्रतीयते। अतः प्रयोगभेदेऽपि प्रयुज्यमानस्य शब्दस्यार्थप्रत्यभिज्ञानात् सामर्थ्यान्तरपरिकल्पने प्रतीति(त)बाधः स्यादेव। अतः यत्रैकेन सामर्थ्येनोपपत्तिर्नास्त्यक्षादिशब्दे तत्र गत्यन्तराभावात् सामर्थ्यभेदेनानेकार्थत्वमपि गृह्यताम्। यत्र त्वनुपपत्तिर्नास्ति, प्रत्यभिज्ञायते च प्रयोगान्तरे प्रयोगान्तरावगतोऽर्थो गवादिशब्दे सास्नादिमदाकृतिमत्स्वनेकेषु विशेषेषु बहुशः प्रयुज्यमानेऽपि, न तत्र सामर्थ्यान्तरपरिकल्पनावकाश इति।

अस्तु तर्हि प्रयोगभेदेऽपि प्रत्यभिज्ञायमानार्थानामेकार्थत्वम्, करोतिस्तु न तथेत्याशङ्क्याह—किं [3]करोतीति चोत्पादनाया एवाधिगमादिति। घटं करोतीत्यत्र करोतेर्योऽर्थोऽधिगतः उत्पादनालक्षणः स एव 'किं करोति—पचति' इति पचत्यादिसमानाधिकरणस्यापि प्रतीयते, नान्य इति भावनार्थ एव करोतिः। ततश्च तत्सामानाधिकरण्यात्पचत्यादीनामपि भावनाविशेषार्थत्वमनुमीयत इति।

यदुक्तं पूर्वपक्षे प्रत्ययस्य भावनाविशेषाभिधायित्वानुमानपक्षे दूषणम् 'एकत्वाल्लकारात्मनः प्रत्ययस्यानेकेषु विशेषेषु वृत्तिर्नोपपद्यते' इति, तदनूद्य परिहरति—यद्यपि प्रत्ययोऽभेदान्न[4]

---

१. 'च' नास्ति—घ.

२. 'इति' नास्ति—ख.

३. करोति च—च.

४. नापि—च.

**यद्यपि प्रत्ययोऽभेदान्न [1]विशेषावगमायालम्, पदन्तु [2]प्रकृतिभेदभिन्नं प्रकृत्यर्थानुरक्तप्रत्ययार्थप्रधानम्। प्रत्ययोऽपि पौर्वापर्यनियमात्[3] पदवन्न स्वतन्त्रः सामान्यमात्रे [4]धियमादधाति, अपि तु**

---

विशेषावगमायालम्, पदन्तु प्रकृतिभेदभिन्नं प्रकृत्यर्थानुरक्त[5]प्रत्ययार्थप्रधानमिति। यद्यपि प्रत्यय एकत्वान्न भावनाविशेषावगमाय समर्थः, पदन्तु प्रकृतिप्रत्ययात्मकं समर्थम्, यतस्तत्प्रकृतिभेदाद्भिन्नम्। भिद्यन्ते हि प्रकृत्यंशाः पचत्यादौ प्रत्ययाभेदेऽपि। अतः प्रकृत्यंशभेदात्प्रकृतिप्रत्ययसमुदायरूपं पदं भिद्यते। ततश्च वाचकनानात्वाद्वाच्यनानात्वमविरुद्धम्।

ननु प्रकृतिप्रत्ययव्यतिरेकेण किमन्यत्पदं नाम? यस्य प्रकृत्यंशभेदाद्भेदोवि(ऽभि)धीयते। तत्समुदाय इति चेत्—न; [6]तस्यावाचकत्वात्, प्रकृतिप्रत्ययांशयोः पृथगेव [7]ह्यर्थवत्ता सत्यपि सहप्रयोगनियमे। किञ्च केवलस्य प्रत्ययस्यार्थो भावनेति भावनावादिनोऽभ्युपगमः। तेन चेदं विरुध्यते प्रकृतिप्रत्ययसमुदायरूपस्य पदस्य भावनाविशेषार्थत्वाभिधानम्। अत्रोच्यते—वैयाकरणोऽत्र पूर्वपक्षवादी। तस्य मतमङ्गीकृत्येदमुच्यते। तस्य मतं हीदम्—न प्रकृतिप्रत्यययोः पदार्थभेदः परमार्थतोऽस्ति, अपोद्धारकल्पितेन भेदेनायं भेदव्यवहारः—अयं[8] प्रकृत्यर्थः, अयं प्रत्ययार्थ इति। अतः प्रकृतिभेदाद्भिद्यमानं पदं प्रकृत्यर्थविशेषितप्रत्ययार्थप्रधानत्वाद्भावनाविशेषे वर्तत इति।

एवं वैयाकरणमतानुसारेण परिहारमुक्त्वा इदानीं स्वमतानुसारेण परिहारमाह—प्रत्ययोऽपि पौर्वापर्यनियमात्पदवन्न स्वतन्त्रः सामान्यमात्रे धियमादधाति, (अपि तु) प्रकृत्यपेक्षया

---

१. विशेषायालं—क. ख, ङ.
२. प्रकृतिभेदाद्भिन्नप्रकृत्यर्था—ग, घ, ङ.
३. नियमाच्च—क, ख, ग, घ, ङ.
४. धियमाविर्भावयति—क, ख.
५. प्रत्ययार्थः—छ.
६. तस्य वाच—च.
७. ह्यर्थवार्ता—च.
८. प्रकृत्यर्थभेदः अयं—च.

**[1]प्रकृत्यपेक्षया आचक्षाणः स्वार्थमेव समर्पयति। सर्वथा [2]तावत्पदं**

---

आचक्षाणः स्वार्थमेव समर्पयतीति। यद्यपि प्रत्ययस्यैकत्वादेकस्मिन्नेव भावनासामान्ये शक्तिर्गृह्यते, न तद्विशेषेषु अनेकेषु, तथापि नासौ सामान्यमात्रे बुद्धिमुत्पादयति, किन्तु प्रकृत्यर्थानुरागलब्धे विशेषे। कुतः? पौर्वापर्यनियमात्। नियतं हि पौर्वापर्यं प्रकृतिप्रत्यययोः, पूर्वैव प्रकृतिः प्रयुज्यते, पर एव प्रत्यय इति। स चायं पौर्वापर्यनियमः अन्यथा नोपपद्यते, यदि प्रत्ययः स्वतन्त्रः सामान्यमात्रे धियमादधीत पदवत्; यथाहि पदं [3]गवादिकं 'गामानय' 'आनय गाम्' इत्येवं अनियतपौर्वापर्यं प्रयुज्यमानं गोत्वादिसामान्यमात्रे बुद्धिमुत्पादयति, पश्चाच्चाकांक्षासन्निधियोग्यतानुगृहीतपदार्थद्वारकवाक्यार्थावगतिपर्यन्ततां प्रतिपद्यते, न तथा प्रत्ययस्सामान्यमात्रे धियं जनयति; पौर्वापर्यनियमात्; अपि तु नियमेन प्रकृतिं पूर्वोच्चरितामपेक्ष्य स्वार्थं भावनासामान्यमाचक्षाणः प्रकृत्यर्थोपरागलब्धविशेषनिष्ठतया बुद्धौ निवेशयति ॥

नन्विदं विरुद्धमिव प्रतीयते, प्रत्ययस्य भावनासामान्ये शक्तिर्गृह्यते, बुद्ध्युत्पादकत्वन्तु विशेषे (इति)। यत्र हि शक्तिर्गृह्यते तत्रैव बुद्धिजनकत्वमिति। अत्रोच्यते—न तावद्विशेषेषु शक्तिर्ग्रहीतुं शक्यते, तेषामानन्त्यात् व्यभिचाराच्च। अन्वयव्यतिरेकाभ्यां तु[4] सामान्यमात्राभिधानसामर्थ्यं[5] निष्कृष्यावगन्तुं शक्यते। तस्मात्सामान्यमेवाभिधेयम्। कथं तर्हि नियमेन विशेषे बुद्ध्युत्पत्तिः? पौर्वापर्यनियमादित्युक्तम्—शक्तिप्रतियोगिकेवलसामान्यप्रतिपत्तिहेतुषु[6] गवादिपदेष्वपरिदृश्यमाना(त्) प्रकृतिप्रत्यययोः[7]। दृश्यमानात् पौर्वापर्यनियमात् प्रत्ययार्थस्य प्रकृत्यर्थान्वयमन्तरेण प्रतिपादनायोग्यता गम्यत इति। तस्मादविरोधः।

---

१. प्रकृत्यर्थापेक्षमाचक्षाणः स्वार्थविशेष्यमेव प्रत्याययति—**क**, **ख**; प्रकृत्यर्थापेक्षया विलक्षणः स्वार्थविशेषमेव समर्पयति—**ग**, **ङ**. प्रकृत्यर्थापेक्षयाचक्षाणः स्वार्थविशेषमेव समर्पयति—**घ**.

२. पदं तावत्—**क**, **ग**.

३. गवयादिकं—**च**.

४. व्यतिरेकात्तु—**छ**.

५. अभिधानमात्रं—**छ**.

६. गवादिषु—**छ**.

७. दृश्यमानत्वात्—**च**.

**विशेषे वर्तते । [1]तेन तावत्स्वतो भेदवत्या [2]अपि [3]धात्वर्थोपधान-व्यज्यमानस्फुटविशेषायास्तत्र [4]विशेषाभिधानमविरुद्धम् ।**

---

सर्वथा तावत्पदं विशेषे वर्तते इति । अस्यायमर्थः—यदि वैयाकरणप्रक्रिया, यदि वा मीमांसकप्रक्रिया, सर्वथा तावत्पदं भावनाया विशेषे वर्तत इति । स्वतो भेदवत्या अपि, धात्वर्थोपधानव्यज्यमानस्फुटविशेषाया इति द्वे विशेषणे भावनायाः । स्वतो भेदवत्या अपीत्यनेनेयमाशङ्का [5]व्यावर्त्यते—यदि स्वतो भेदो भावनायाः स्यात्, धात्वर्थोपधानानपेक्षया सा स्वत एव व्यावृत्ताकारा शब्देन प्रतिपाद्यते (चेत) । अथ धात्वर्थोपधानोपरागमन्तरेण न प्रतिपाद(नार्हा) विशेषतः, तर्हि न स्वतो भेदवतीति । एषा शङ्का अपनीयते—स्वतो भेदवत्येव भावना, न पुनराकाशवत्स्वत एकरूपा सती परोपाधिकृतभेदाद्भेदेन विभाव्यत इति, तथात्वे प्रमाणाभावात्क्रिया(त्व)व्याघातप्रसङ्गाच्च । सा खलु भावना क्रिया । क्रिया च कारकसाध्यस्वभावा । सा च सर्वत्रैकरूपा अभ्युपगम्यमाना नित्या अभ्युपगता स्यात् । ततश्च क्रियारूपतां जह्यात् । अथ मतं स्वतो नित्याया अपि भावनाया उपधानोपरागनिबन्धनं साध्यत्वम्, यथा आकाशस्य घटाद्युपाधिनिबन्धनं जन्मनाशादि, तद्वदिति । एवन्तर्हि स्वतः साध्यस्वभावेनोपाधिना अन्येन भवितव्यम्, यदुपरागाद्भावना साध्या अवगम्येत । नच सोऽस्ति । अस्ति चेत्तस्यैव क्रियात्वं भावनात्वं च स्यात् । तस्मात्स्वत एव भेदवती भावनेति । एवन्तर्हि[6] विशेषाकारेणोपाध्यनपेक्षया शब्दैः प्रतिपाद्येतेत्याशङ्कापाकरणार्थं[7] धात्वर्थोपधानव्यज्यमानस्फुटविशेषाया इति विशेषणम् । धात्वर्थ एवोपधानं धात्वर्थोपधानम्, उपधानमुपाधिः, तेन धात्वर्थोपधानेन व्यज्यमानः स्फुटो भवति [8]यस्या विशेषः—सेयं धात्वर्थोपधानव्यज्यमानस्फुटविशेषा भावना, तस्या विशेषे पदं वर्तते इति सम्बन्धः । कथन्तर्हि स्वतो

---

१. ‘तेन तावत्’—नास्ति—**क, ख** ;

२. ‘अपि’ नास्ति—**ग, घ.** तेन स्वतोऽभेदवत्या अपि—**ङ.**

३. धात्वर्थोपमान—**ख.**

४. विशेषाभिधानानुमान—**ग, घ. ङ.**

५. व्यावर्तते—**छ.**

६. ‘तर्हि’ इत्यतः परं ‘स्वत एव’ अधिकं वर्तते—**छ.**

७. वारणार्थं—**छ.**

८. यस्य—**च.**

**ननु प्रत्ययस्य सामान्यमभिधेयमिष्टम्, [1]तत्कथमुभयोस्सामान्याभिधायिनोरैकाधिकरण्यम्[2] ?**

---

विद्यमानो भेदोऽभिव्यक्तावुपधानमपेक्षते ? का अत्रानुपपत्तिः। दृश्यन्ते हि स्वतो भिन्ना अपि क्षीरादिरसाः क्षीरादिभिराश्रयविशेषैर्भेदेन व्यपदिश्यमानाः, क्षीररसो गुडरस इत्यादि ।

ननु तत्र यद्यपि भेदव्यपदेश उपाधिपरामर्शापेक्षः, तथापि स्वत एव भेदोऽवगम्यते प्रत्यक्षेण क्षीरादिरसानाम् । सत्यम्; तत्तु भावनायामपि समानम् । कथम् ? सापि हि भावना प्रत्यक्षेणावगम्यत इति वक्ष्यते। [3]तथा च परिस्पन्दादिलक्षणायां भावनायां प्रवर्तमानं प्रत्यक्षं तत्साध्यानागतसंयोगविभागादिधात्वर्थोपाधिपरामर्शविकलमेव भावनाविशेषाकारग्राहीति ग्राह्यम्[4], अवर्तमानस्य प्रत्यक्षविषयानुप्रवेशानुपपत्तेः । तस्मात्स्वत एव भेदवती भावना धात्वर्थोपाधिव्यज्यमानविशेषाकारा शब्देन प्रतिपाद्यत इत्यलमतिप्रपञ्चेन ॥

तत्र विशेषाभिधानमविरुद्धमित्यस्यायमर्थः—यस्मात्पदं विशेषे वर्तते ततः किं करोतीति प्रश्नप्रतिवचने पचतीत्यत्र भावनाविशेषाभिधानं न विरुध्यत इति । तत्र चोदयति—ननु प्रत्ययस्य सामान्यमभिधेयमिष्टम्, तत्कथमुभयोः सामान्याभिधायिनोरैकाधिकरण्यमिति । अयमर्थः—आख्यातप्रत्ययस्य सामान्यमभिधेयमिष्टं करोतेरिव, तत्र कथमुभयोः करोतिप्रत्यययोस्सामान्यवाचिनोस्सामानाधिकरण्यमिति । ननु पूर्वग्रन्थे सामान्यवाचिनोऽपि प्रत्ययस्य प्रकृत्यपेक्षया विशेषवृत्तिः निरूपिता । तत्र कथमस्य चोद्यस्यावकाशः ? उच्यते—यद्यपि प्रकृतिसमभिव्याहारात्प्रत्ययस्य [5]विशेषे वृत्तिर्निरूपिता, तथापि सामान्यमेवाभिधेयमिष्टम्, न विशेषः । अभिधेयद्वारकञ्च सामानाधिकरण्यं सति सम्भवे ग्रहीतुं युक्तम् । तच्च न सम्भवति । करोतेराख्यातप्रत्ययस्य च भावनासामान्यमात्राभिधायित्वाभ्युपगमात् । अन्यूनानति-

---

१. 'तत्' नास्ति—ख.
२. 'सामानाधिकरण्यम्'—ख.
३. ततश्च—छ.
४. गृहीतिग्राह्यम्—च.
५. विशेषवृत्तिः—च.

**उच्यते—**

**भेदोपहितसामान्यवचनेऽप्यपृथक्श्रुतिः ।**
**को राजा याति? पाञ्चालराज इत्यभिवीक्ष्यते ॥ २८ ॥**

---

रिक्तार्थयोश्च सामानाधिकरण्यायोगात्, करहस्तादिशब्दवत्। यदा तु पचतीत्यत्र प्रकृत्यंशेनोत्तरमुच्यते, करोतिश्च धात्वर्थसामान्यवचन इति पक्षः, तदोभयोः सामान्यविशेषाभिधायिनोः करोतिपचत्योरभिधेयद्वारकं सामानाधिकरण्यमविरुद्धम्। तस्मादेष एव पक्षो ग्राह्य इत्यभिप्रायः। तत्र परिहारमाह—

उच्यते—

भेदोपहितसामान्यवचनेऽप्यपृथक्श्रुति( : ) ।
को राजा याति? पाञ्चालराज इत्यभिवीक्ष्यते ॥ इति ॥

अयमर्थः—सामान्याभिधायिनोश्शब्दयोः सामानाधिकरण्यं नोपपद्यत इति यदुक्तम्, तन्न सर्वत्र। यत्र द्वावपि शब्दौ केवलसामान्यवचनौ तरुवृक्षादिशब्दवत्, तत्र सामानाधिकरण्यानुपपत्तिः। यत्र द्वयोस्सामान्यवाचित्वाविशेषेऽप्येकं शुद्धं सामान्यस्वरूपमाचष्टे, अन्यस्तु केनचित् उपाधिना विशिष्टं प्रतिपादयति, तत्र सामानाधिकरण्यमुपपद्यते। दृश्यते हि 'को राजा याति' इति प्रश्नवाक्यवृत्तिना केवलराजसामान्यवाचिना राजशब्देन 'पाञ्चालराजः' इति [१]प्रतिवचनगतस्य राजशब्दस्य पाञ्चालाख्यजनपदविशिष्टराजसामान्यवचनस्य सामानाधिकरण्यम्। एवमत्रापि करोतिना शुद्धसामान्यवाचिना धात्वर्थोपाध्यवच्छिन्नभावनासामान्यवाचिनः प्रत्ययस्य सामानाधिकरण्यमविरुद्धमिति। अत्रैषा अक्षरयोजना। [२]भेदोप

---

१. प्रतिवचनं न तस्य राज—**च**.

२. भेदोपहितं यत्सामान्यं तद्वचनेदि वचनगते शब्दे अपृथक्श्रुति—**च**.

**प्रश्नवर्तिना हि सामान्यशब्देन व्यवच्छिन्नसामान्यविषयाः श्रुतयः परिदृष्टसमानाधिकरणप्रयोगाः[१]; को राजा याति? पाञ्चालराज इति यथा ।**

**युक्त एवोत्तरे सामान्यनिर्देशः; अन्यथा प्रश्नगतं तदपेक्षणीयं**

---

हितं केनचिदुपाधिभेदेनोपहितं यत्सामान्यं तद्वचने प्रतिवचनगते शब्दे अपृथक्श्रुतिः सामानाधिकरण्यमभिवीक्ष्यते । केन सामानाधिकरण्यमित्यपेक्षायां प्रश्नवाक्यगतेन केवलसामान्यवचनेन शब्देनेति द्रष्टव्यम् । अथवा भेदोपहितसामान्यशब्दाभ्यां वचनशब्दः प्रत्येकमभिसम्बध्यते—भेदोपहितवचने सामान्यवचने चेति । भेदोपहितं किमित्यपेक्षायां सामान्यमेव सन्निधानादवगम्यते । प्रश्नवचने सामान्यमात्राभिधाने प्रतिवचने चोपहितसामान्याभिधाने सति सामानाधिकरण्यमुपपद्यत इति । शेषं सुगमम् । एतद्विवृणोति—प्रश्नवर्तिना हि सामान्यशब्देन व्यवच्छिन्नसामान्यविषयाः श्रुतयः परिदृष्टसमानाधिकरणप्रयोगाः; 'को राजा याति? पाञ्चालराजः' इति यथा इति । नात्र तिरोहितं किञ्चिदपि[२]।

ननु तत्राप्युत्तरे विशेषनिर्देश एव [३]युक्तः, न सामान्यनिर्देशः, सामान्यस्यासिद्धत्वात् विशेषस्यैव पृष्टत्वात् कथ[४]मसिद्धमसिद्धेन साध्यत इत्याशङ्कयाह—युक्त एवोत्तरे सामान्यनिर्देशः, अन्यथा प्रश्नगतं तदपेक्षणीयं स्यादिति । यद्युत्तरे सामान्यनिर्देशो न क्रियते पाञ्चाल इत्येतावदेवोच्येत[५], तदा प्रश्नवाक्यगतं तत्सामान्यमपेक्षणीयं स्यात् । अन्यथा प्रश्नविषयराजसामान्यविशेषत्वं पाञ्चालजनपदसंबन्धिनो न सिद्ध्यति, तस्य राजव्यतिरिक्तस्यापि भावात् । प्रश्नगतसामान्यापेक्षायान्तु प्रष्टुः सुखप्रतिपत्तिर्न स्यात् इति । मा भूत्सुखप्रतिपत्तिः, प्रतिपत्तिस्तु कथञ्चिद्भवत्येव । दृश्यते चोत्तरे विशेषमात्रस्यैव निर्देशः 'को वृक्षः?

---

१. सामानाधिकरण्यप्रयोगाः—ख.
२. किञ्चिदस्ति—छ.
३. युक्तं—च.
४. 'असिद्धं' नास्ति—छ.
५. उच्यते—च.

**स्यात्[१], विशेषतस्तु भावनाया [२]असंविज्ञानपदभेदत्वात्परोपधान-व्यज्यमान[३]स्फुटविशेषायाः । तस्मान्न सिद्धसाधनम्, न [४]विपर्यय-साधनम्, [५]न दृष्टान्ताभावः ।**

---

शिंशपा' इत्यादौ। तत्रोत्तरे सामान्यनिर्देशो नियमेन [६]न कर्तव्य इत्याशङ्कयाह—विशेष(त)-स्तु भावनाया असंविज्ञानपदभेदत्वात्परोपधानव्यज्यमानस्फुटविशेषाया इति। अस्तु वा अन्यत्रोत्तरे विशेषमात्रस्यैव कदाचिन्निर्देशः, विशेषवाचिनश्शब्दस्य भावात्, भावनायास्त्व-संविज्ञानपदभेदत्वादुत्तरे विशेषनिर्देशः कदाचिदपि नोपपद्यते ।

ननु किमिदमसंविज्ञानपदभेदत्वं नाम? उच्यते—सम्यक् विशेषाकारेण ज्ञायतेऽर्थो येन पदेन तत्संविज्ञानपदम्, तस्य भेदो विशेषः संविज्ञानपदभेदः, न स विद्यते यस्या भावनाया-स्सेयमसंविज्ञानपदभेदा[७], तद्भावोऽसंविज्ञानपदभेदत्वम् । न कश्चिदपि शब्दो भावनाविशे-षेण[८] गृहीतसम्बन्धोऽस्तीत्यर्थः । तस्मादुत्तरे नियमेन सामान्यनिर्देशो युक्तः । [९]असंविज्ञान-पदभेदाया भावनायाः कथं विशेषसिद्धिरित्याकाङ्क्षायामुक्तम्—परोपधानव्यज्यमानस्फुट-विशेषाया इति । परेण धात्वर्थेनोपधानेन व्यज्यमानः [स न] स्फुटो भवति यस्या विशेषः, सेयं परोपधानव्यज्यमानस्फुटविशेषा भावना, तस्याः सामान्यनिर्देश एवोत्तरे युक्त इत्यर्थः । एवं च सति सामानाधिकरण्यादित्यादिना पूर्वपक्षे ये दोषा उक्ताः ते परिहृता भवन्तीत्याह—तस्मान्न सिद्धसाधनम्, न विपर्ययसाधनम्, न दृष्टान्ताभाव इति ॥ करोतिसामानाधिकरण्येन पचत्यादीनां करोत्यर्थविशेषाभिधानानुमानपक्षे धातूनामेव विशेषाभिधानसम्भवप्रतिपादनमुखेन

---

१. गतस्तदपेक्षणीयः स्यात्—**क, ख.**
२. असंविज्ञात—**ग,** घ, ङ.
३. 'स्फुट' नास्ति—**ग,** घ, ङ.
४. विपर्ययासाधनं—**घ.**
५. नादृष्टान्तता—**क, ख**; नाप्यदृष्टान्तता—**ग,** घ, ङ.
६. 'न' नास्ति—**छ.**
७. पदभेदाद्यपदभेदा तद्भावः—**च.** पदभेदः तद्भावः संविज्ञानपदभेदत्वं—**छ.**
८. विशेषण—**च.**
९. असंभेदाया भावनायाः—**च.**

**भावाभावे प्रयोगस्तु द्विधापि न [1]निरीक्ष्यते ।**
**अन्ततस्सोऽस्ति[2]धात्वर्थगोचरो लक्ष्यते तथा ॥ २९ ॥**

---

सिद्धसाधनमुक्तं न प्राप्नोति, प्रत्ययस्यैवैकस्याप्यनेकेषु विशेषेषु प्रकृत्यर्थान्वयाधीनाविर्भाविषु तदपेक्षया वृत्तिसम्भवस्योक्तत्वात् । विपर्ययसाधनदृष्टान्ताभावौ तु करोत्यर्थमात्राभिधानानुमान-पक्षानाश्रयणादेव परिहृतौ, तयोस्तत्पक्षाश्रयत्वात् ॥

यत्पुनरुक्तं करोतेरपि तावद्भाववचनत्वमनुपपन्नम्, तदभावेऽपि प्रयोगदर्शनात्, कुतस्तत्सामानाधिकरण्यात्पचत्यादीनां तादर्थ्यानुमानमिति ।

तस्योत्तरमाह—

भावाभावे प्रयोगस्तु द्विधापि न निरीक्ष्यते ।
अन्ततस्सोऽस्ति धात्वर्थगोचरो लक्ष्यते तथा ॥ इति ॥

अयमर्थः—योऽयं भाव्याभावेन भावनावाचिशब्दाभावेन च द्विविधो भावनाया अभावः, तत्र करोतेः प्रयोगो निरीक्ष्यत इति यदुक्तम्, तन्नास्ति ; तत्रापि भावनाया भावात्[3]। कथम्? घण्टा ध्वनतीत्यत्र तावद्भावना भवत्येव, भाव्यस्य भावात् । भाव्याभावेन हि तत्र भावनाया अभाव उच्यते । भाव्यस्य चाभावोऽसिद्धः । कस्तर्हि तत्र भाव्यः? धात्वर्थ एवान्ततो भाव्यः, सुखादीनां सतामप्यविवक्षितत्वात् । नच 'का क्रिया? पाकः' इत्यत्रापि भावना नास्ति । भावनाया वाचकत्वाभिमताख्यातप्रत्ययाभावेन हि तत्राभाव उच्यते, स्वरूपेण विद्यमानाया अपि शब्दार्थरूपेणाभावात् । तत्र यद्यपि आख्यातप्रत्ययो नास्ति, तथापि भावना शब्दार्थत्वं न जहाति, यतोऽत्र पाक इत्यस्यैव शब्दस्यासावर्थः। यद्यपि पाक इति घञन्तेन धात्वर्थवचनेन[4] नाभिधीयते भावना, तथापि लक्षणया प्रतिपाद्यते, अभिधेयस्य

---

१. निरीक्षितः—**ख, ग, घ, ङ.**
२. सोऽपि—**ग, घ, ङ.**
३. अभावात्—**च.**
४. 'न' नास्ति—**छ.**

**घण्टा ध्वनतीति[१] भाव्याभावेन भावनाया अभाव उच्यते । [२]सर्वश्च धात्वर्थः किञ्चिदसदुत्पादयति । ध्वननमपि सुखं [३]दुःखं ज्ञानं वा । अन्ततो[४] धात्वर्थ एव भाव्यः । नहि सर्वत्र धात्वर्थस्य [५]करणतैव, कर्मतापि तु [६]क्वचित्तन्मात्रनिर्वृत्तिविवक्षायाम् । का**

---

पाकस्य भावनाया विना अभावात् । तदेतदुक्तम्—लक्ष्यते तथेति । एतत्प्रपञ्चयति—घण्टा ध्वनतीति भाव्याभावेन भावनाया अभाव उच्यते । सर्वश्च धात्वर्थः किञ्चिदसदुत्पादयति । ध्वननमपि सुखं दुःखं[७] ज्ञानं वा । अन्ततो धात्वर्थ एव भाव्य इति ॥ अयमर्थः—ध्वनतीत्यत्र धात्वर्थ एव भाव्यः परिशिष्यते । सुखदुःखज्ञानानामस्मिन्प्रयोगेऽविवक्षितत्वात्तद्भाव्या भावना[८] विद्यमानापीह न[९] शब्दार्थीभवितुमर्हतीति धात्वर्थभाव्यैव भावना ध्वनतीत्यत्र प्रत्ययेनाभिधीयते । ततश्च तत्सामानाधिकरण्यस्य[१०] 'किं करोति घण्टा' इति प्रश्नवाक्यवर्तिनः करोतेर्न भावनाया अभावे प्रयोग इति ॥

ननु धात्वर्थस्य भावनायां करणत्वमभ्युपगम्यते; तत्र कथं कर्मत्वमित्याशङ्क्याह—नहि सर्वत्र धात्वर्थस्य करणतैव, कर्मतापि (तु) क्वचित्तन्मात्रनिर्वृत्तिविवक्षायामिति । अयमर्थः—न सर्वत्र धात्वर्थस्य करणतैव शब्देनाभिधीयते, किन्तु कर्मतापि क्वचित्, यत्र धात्वर्थनिर्वृत्तिमात्रं विवक्ष्यते—यथा 'अग्निहोत्रं जुहोति' इत्यादौ । तत्र कर्मतैव धात्वर्थस्य शब्देनाभिधीयते, न करणता । एतदुक्तं भवति—धात्वर्थस्य [११]भावनया निर्वर्त्य-

---

१. ध्वनतीति हि भाव्या—**ग**, **घ**; भाव्याभावेन हि—**ङ**.
२. सर्वत्र—**क**, **ख**; सर्वस्तु—**ङ**.
३. दुःखज्ञानं वा—**ग**, **घ**, **ङ**.
४. अन्तरो—**क**, **ख**.
५. साधनतेव—**क**, **ख**.
६. क्वचित्तावन्मात्र—**क**, **ख**.
७. 'वा' अधिकं वर्तते—**छ**.
८. तद्भाव्यभावना—**च**.
९. मानापि न शब्दार्थी—**च**; मानापीह शब्दार्थी—**छ**.
१०. किं करोति प्रश्नवाक्य—**छ**.
११. भावनाया—**च**.

**क्रिया? पाकः इति [१]च, द्विविधत्वाच्छब्दार्थस्य श्रौतलक्ष्य[२]माणभेदेन। [३]अतो नाभावो भावनायाः शब्दतः, तद्विशेष[४]लक्षणार्थत्वात्पाकशब्दस्य।**

---

मानत्वात्कर्मत्वं विद्यते फलापेक्षया करणत्वञ्च। तत्र तस्य अनयोः कर्मकरणत्वयोः यद्यदा विवक्ष्यते तत्तदा अभिधीयते। ध्वनतीत्यत्र तु धात्वर्थनिर्वृत्तिमात्रं विवक्षितम्, न तत्करणस्य फलान्तरस्य निर्वृत्तिर्विवक्षिता। अतो युक्तं धात्वर्थकर्मिकाया भावनाया अभिधानमिति॥ नच सर्वा पुरुषार्थकर्मिकैव भावनेति नियमोऽस्ति, अचेतनकर्तृकायास्तस्याः स्वरूपापेक्षितभाव्यमात्रपर्यवसानात्। चेतनकर्तृकापि न सर्वा पुरुषार्थकर्मिका, प्रमादकृतायां व्यभिचारात्। या तु चेतनस्य बुद्धिपूर्विका भावना [सा] नियमेन समुद्दिष्टपुरुषार्थभाव्यविशेषकर्मिका, सापि कदाचित्समुद्दिष्टमपि पुरुषार्थं भाव्यं [५]व्यभिचरति यथा—मिथ्याज्ञानपूर्विका प्रतिषिद्धहिंसादिविषया भावना। अतः सम्यक्ज्ञानपूर्विका पुरुषस्य प्रवृत्तिर्भावना नियमेन पुरुषार्थभाव्या, नान्येत्यलमतिप्रपञ्चेन॥

इदानीं 'लक्ष्यते तथा' इति श्लोकैकदेशार्थाविष्करणायाह—का क्रिया? पाक इति च द्विविधत्वाच्छब्दार्थस्य श्रौतलक्ष्यमाणभेदेन। अतो नाभावो भावनायाश्शब्दतः, तद्विशेषलक्षणार्थत्वात् पाकशब्दस्येति॥ का क्रिया पाक इत्यत्रापि नाभावो भावनायाश्शब्दत इति व्यवहितेन सम्बन्धः। कथं शब्दतो नाभावो भावनायाः, यस्माद्भवता [६]तद्वाचकत्वाभिमतः शब्द आख्यातप्रत्यय इह नोपलभ्यते। पाकशब्द इह प्रयुज्यते। तस्य च भावना अर्थो न भवतीत्या[७]शङ्कापाकरणायोक्तम्—द्विविधत्वाच्छब्दार्थस्य श्रौतलक्ष्यमाणभेदेनेति। द्विविधो हि

---

१. चेहापि द्विविध—**ग, घ.**
२. लक्ष्यभेदेन—**ख, ग, घ**; श्रौतभेदेन—**ङ.**
३. 'अतो' नास्ति—**क, ख, ग, घ, ङ.**
४. लक्षणाप्रधानत्वात्—**क, ख**; लक्षणाप्रवणत्वात्—**ग, घ, ङ.**
५. व्यपदिशति—**च.**
६. तद्वाचकाभिमतः—**झ.**
७. आशङ्कावारणायोक्तम्—**छ.**

तिङन्तेऽपि तर्हि [१]लक्ष्यमाण एव भावोऽस्तु। नैतत्सारम्। यतः[२]—

कः पाकः[३]पचतीत्यत्र बुद्धिभेदमपह्नुते ।
न भावनापरामर्शमन्तरेण च[४] भाव्यता ॥ ३० ॥

---

शब्दस्यार्थः श्रौतो लक्ष्यमाणश्च। यत्र वृद्धव्यवहारेणाभिधानसामर्थ्यं गृह्यते, स श्रौतो नामार्थः। यत्र त्वभिधेयस्यार्थस्यासम्भवे सति तदविनाभावादन्यस्मिन्नर्थे शब्दात्प्रतिपत्तिर्भवति, स लक्ष्यमाणोऽर्थः। यद्यपि पाकशब्दस्य श्रौतोऽर्थो न भवति भावना, तथाऽपि लक्ष्यमाणोऽर्थो[५] भवत्येव। तत्कथमित्यस्यामाकाङ्क्षायामुक्तम्—पाकशब्दस्य तद्विशेषलक्षणाप्रधानत्वादिति॥ तद्विशेषो भावनाविशेषः तस्य लक्षणया प्रतिपादनपरत्वात्। पाकशब्दः स्वार्थाभिधानद्वारेण तदविनाभाविनं भावनाविशेषं लक्षयति। पाकशब्दस्यैव लक्षणया भावनाशब्दत्वान्न शब्दतोऽभावो भावनायाः। ततश्च का क्रियेति प्रश्नवाक्ये करोतेः प्रयोगो न भावनाया अभावे, किन्तु भाव एवेति सिद्धम्॥

एवं पाकशब्दस्य [६]करोतिना लक्षितार्थद्वारके सामानाधिकरण्येऽभ्युपगम्यमाने तिङन्तेऽपि करोतिसामानाधिकरण्येनाभिधेया भावना न सिद्ध्यति। अपि तु लक्ष्यमाणैव, घञन्तवदिति यदनिष्टापादनं कृतं पूर्वपक्षे, तदुद्धारणायोत्थापयति—तिङन्तेऽपि तर्हि लक्ष्यमाण एव भावोऽस्त्विति॥ तस्य परिहारमाह—

---

१. लक्ष्य एव—क, ख, ग, घ, ङ.
२. 'यतः' नास्ति—क, ख; 'यतः सर्वत्र कः पाको बुद्धिभेदमपह्नुते न भावनापरामर्शमन्तरेण च भाक्तमेतत्—ग, घ, ङ.
३. पाकं—क, ख.
४. 'च' नास्ति—क.
५. माणार्थो—च.
६. करोतिना पाकशब्दस्य—च.

**इदं भवान् पृष्टो व्याचष्टाम्—पाकः पचती[1]त्यनयोर्धात्वर्थौ भिद्यते, न[2]वा भिद्यते, इति । को हि स्फुटं प्रत्ययभेदमवजानीते[3]। तथाहि—तिङन्ते भाव्यः स गम्यते न तथाभूतो(रूपो) घञन्ते,**

---

नैतत्सारम् , यतः—

> कः [4]पाकः पचतीत्यत्र बुद्धिभेदमपह्नुते ।
> न भावनापरमर्शमन्तरेण च भाव्यता ॥ (इति) ॥

अयमर्थः—घञन्ते लक्ष्यते भावना, नाभिधीयते, तिङन्ते त्वभिधीयते इत्यत्र [5]विशेषहेतुरत्रोच्यते। कोऽसौ हेतुः? धात्वर्थविषयो बुद्धिभेदः सिद्धसाध्यत्वरूपः। स चायं बुद्धिभेदः न शक्यते नास्तीति वदितुम्, अतिस्फुटत्वात्। या च तिङन्ते प्रतीयमाना धात्वर्थस्य भाव्यता सा अभिधेयभावनासंस्पर्शमन्तरेण न सम्भवति। लक्ष्यमाणभावनासंस्पर्शस्य घञन्तेऽपि भावात् इत्यभिप्रायः ॥

इदानीं पक्षविभागेन श्लोकोक्तमर्थं व्याख्यातुकामः विकल्पयति—इदं भवान्पृष्टो व्याचष्टाम्—पाकः पचतीत्यनयोर्धात्वर्थौ भिद्यते, न वा भिद्यत इति (इति)॥ न भिद्यत इत्येष तावत्पक्षोऽनुपपन्न इत्याह—को हि स्फुटं प्रत्ययभेदमवजानीते इति ॥ योऽपि तिङन्तेष्वभिधेयां भावनामवजानीते पूर्वपक्षवादी, सोऽपि घञन्ते तिङन्ते च धात्वर्थविषयं बुद्धिभेदं नावजानीते इत्यर्थः ॥ बुद्धिभेदं दर्शयति—तथा हि—तिङन्ते भाव्यः स गम्यते न तथाभूतो (रूपो) घञन्त इति ॥ स धात्वर्थः तिङन्ते पदे भाव्यो गम्यते साध्यरूपेण प्रतीयते, घञन्ते

---

१. पचतीत्यनयोर्भिद्यते धात्वर्थौ नवा—क, ख. पचतीत्यत्र धात्वर्थौ भिद्यते नवेति—ग, घ, ङ.

२. अवजानीते। अङ्गीकुर्मः प्रत्ययभेदम्, पचतीति भाव्यः स गम्यते न तथा घञन्ते—क, ख.

३. 'घञः' नास्ति—च.

४. पाकं—च.

५. 'विशेष'–नास्ति—च.

**भावे तद्विधानात्, शुद्धस्य च धात्वर्थस्य तत्त्वव्याख्यानात्—'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति ॥**

**तत्तर्हि भाव्यत्वं [१]भावनासंस्पर्शकृतमिति तिङन्तानां [२]सा**

---

तु पदे न तथारूपो भाव्यरूपो गम्यते, किन्तु सिद्धरूप एवेति। तत्र हेतुमाह—भावे तद्विधानादिति। तस्य घञो भावे विधानादित्यर्थः। भवतु भावे विधानं घञः, कथमेतावता घञन्ते साध्यताप्रतीतिर्धात्वर्थस्य निवार्यत इत्याशङ्क्याह—शुद्धस्य च धात्वर्थस्य तत्त्वव्याख्यानादिति ॥ शुद्धस्य साध्यतारूपरहितस्य धात्वर्थस्य तत्त्वेन [३]भाव्यत्वेन व्याख्यानादिति। एतदेव दर्शयति—धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते इति (इति) ॥ अत्र केवल-शब्देन कारकसंसर्गरहितत्वं विवक्ष्यते। शुद्धशब्देन साध्यतारहितत्वमिति। अतो घञन्ते सिद्धरूपो धात्वर्थो गम्यते। तिङन्ते तु साध्यरूप इत्यभ्युपेयम्।

भवतु तर्हि तिङन्ते भाव्यत्वं धात्वर्थस्य। कथमेतावता भावनाया अभिधेयत्वनिश्चय इत्याशङ्क्याह—तत्तर्हि भाव्यत्वं भावनासंस्पर्शकृतमिति ॥ यद्भाव्यत्वं धात्वर्थस्य तिङन्ते प्रतीयते, [४]तद्भावनासंस्पर्शात्, न स्वतः। स्वतस्तु सिद्धस्वभावत्वम्। अतो धात्वर्थस्यावगम्य-मानं साध्यत्वमन्यथानुपपत्त्या शब्दाभिहितसाध्यस्वभावभावनासंस्पर्शं गमयति। अतस्ति-ङन्तानां भावना अर्थ इति निश्चीयते। ननु गम्यमानभावना[५]संस्पर्शादप्युपपद्यमानत्वाद्धा-त्वर्थसाध्यता नाभिधीयमानभावनासंस्पर्शं[६] गमयतीत्याशङ्क्याह—गम्यमानत्वे हि तिङन्त-घञन्तयोर्नैव धीर्भिद्येत, अविशेषादिति। यदि तिङन्तेऽपि गम्यमानत्वमेव भावनायाः, नाभि-

---

१. भावनासंसर्गः—ख.
२. सोऽर्थः—ख, ग, घ, ङ.
३. भावत्वेन—छ.
४. तद्भानासंस्पर्शात्—च.
५. संस्पर्शत्वाद—च.
६. संसर्गं—छ.

**अर्थः । गम्यमानत्वे हि तिङन्तघञन्तयोः [1]नैव धीर्भिद्येत, अवि-शेषात् ।**

**नच [2]साधनसम्बन्धाद्भेदः[3], [4]'गम्यते' 'स्थीयते' [5]इति प्रसङ्गात् ।**

---

धेयत्वम्, तदा गम्यमानत्वस्य घञन्तेऽप्यविशिष्टत्वात् अभिधेयत्वस्योभयत्राप्यभावात् घञन्ते तिङन्ते च न बुद्धिर्भिद्येत। भिद्यते च सिद्धसाध्यरूपभेदेन। अतस्तिङन्ते भावना अभिधेयेति निश्चीयते ॥

ननु तिङन्ते धात्वर्थस्य साध्यताप्रतीतिः साधनसम्बन्धादप्युपपद्यते अन्तरेण भावना-संस्पर्शम्। तत्र हि धात्वर्थस्य कर्तृसाधनेन सम्बन्धोऽवगम्यते, तिङः कर्तरि स्मरणात्। अतः साधनसम्बन्धात्तिङन्ते [6]साध्यत्वप्रतीतिः, न भावनासम्बन्धात्। तथा घञन्तेऽपि साधन-सम्बन्धाभावादेव सिद्धरूपप्रतीतिर्धात्वर्थस्य, न भावनासंस्पर्शाभावात्। नहि तत्र भावना-(साधन)सम्बन्धो गम्यते, तस्य भावे विधानात्। 'धात्वर्थः केवलः' इति च कारक-सम्बन्धरहितस्य धात्वर्थस्य भावत्वव्याख्यानात्। अतः साधनसम्बन्धासम्बन्धनिबन्धनः तिङन्तघञन्तयोः धात्वर्थे बुद्धिभेदः, न भावनासम्बन्धासम्बन्धनिबन्धन इत्याशङ्क्याह— नच साधनसम्बन्धाद्भेदः, 'गम्यते' 'स्थीयते' इति प्रसङ्गादिति ॥ योऽयं तिङन्त-घञन्तयोर्धात्वर्थे बुद्धिभेदः, न [7]स साधनसम्बन्धनिबन्धन इति शक्यते वक्तुम्, गम्यते

---

१. नैव धीर्भिद्यताम्, अविशेषात्—क; नैव-भिद्यतां विशेषः—ख; धीर्नभिद्येत, अवि शेषात्—ग, घ; विभिद्येत, अविशे-षात्—ङ.

२. साधनसाध्यसंबन्धात्—क, ग, ङ.

३. भेदावगमः—क, ग, घ, ङ.

४. 'गम्यते' नास्ति—क, ग, घ, ङ.

५. इत्यत्रापि प्रसङ्गात्—क, ख; इत्यत्रा-प्रसङ्गात्—ग, घ; इत्यप्रसङ्गात्—ङ.

६. साध्यप्रतीतिः—च.

७. 'स' नास्ति—च.

**किञ्च—**

**पाकं करोति पचतीत्याख्यातार्थो [१]निदर्श्यते ।**
**भेदेन शब्दवृत्तिज्ञैः[२] पाकादौ नत्वयं क्रमः ॥ ३१ ॥**

---

इति स्थीयते इति चोभयत्र बुद्धिभेदप्रसङ्गात् । तथाहि—गम्यत इत्यत्र कर्मणि लकारः, गमेस्सकर्मकत्वात् । अतस्तत्र कर्मणा साधनेन सम्बन्धो धात्वर्थस्य गम्यते । स्थीयते इत्यत्र तु भावे लकारः, तिष्ठतेरकर्मकत्वात् 'भावे चाकर्मकेभ्यः' इति च स्मरणात् । अतस्तत्र साधनसम्बन्धो न प्रतीयते । अतश्चोभयत्र प्रतीतिर्भिद्येत, गम्यत इत्यत्र साध्यरूपेण धात्वर्थे प्रतीतिस्स्यात् साधनसम्बन्धावगमात्, स्थीयते इत्यत्र तु सिद्धरूपेण, साधनसम्बन्धानवगमात् । नचैवमस्ति, उभयत्रापि साध्यताप्रतीतेरविशिष्टत्वात् । तस्मान्न साधनसम्बन्धाद्भेदः, किन्तु भावनासंबन्धादेवेति निश्चीयत इति ॥

इतश्च तिङन्ते धात्वर्थातिरेकेण भावना अभिधीयते, न घञन्त इव धात्वर्थमात्रमित्याह—

किञ्च—

पाकं करोति पचतीत्याख्यातार्थो निदर्श्यते ।
भेदेन शब्दवृत्तिज्ञैः पाकादौ न त्वयं क्रमः ॥ (इति) ॥

अयमर्थः—पचतीत्यस्य शब्दस्य कोऽर्थः इति केनचिज्जिज्ञासुना पृष्टः अन्यः शब्दवृत्तिवित् तस्यार्थं भेदेन निदर्शयन् दृश्यते—पाकं करोतीत्यर्थ इति । अतो गम्यतेऽस्य शब्दस्य द्वावर्थावनेन प्रतिपन्नौ—पाकः करोत्यर्थश्चेति । यस्तु घञाद्यन्तः पाकादिशब्दः, तत्र नायं क्रमः, क्रमेण द्वावर्थौ न[३] निदर्श्येते, किन्तु एक एव, पाक इति विक्लित्तिरित्यर्थः इति ।

---

१. हि दृश्यते—**ख**; न दृश्यते—**ग, घ, ङ.**
२. वृत्तिज्ञः—**ख.**
३. न हि दृश्येते—**छ.**

**पचति, पाकं करोतीति तिङन्तपदार्थं भेदेन [1]निदर्शयति [2]नाप्रतिपद्य भेदम्, पाकादिषु तु न तथा, भेदप्रतिपत्तेरभावादिति गम्यते ।**

**[3]परिकल्प्य भेदं तथोपदर्शनम्, [4]पाकस्याभिनिर्वर्तनं [5]करो-**

---

अतो गम्यते नास्त्यर्थभेद इति । एतद्विवृणोति—पचति पाकं करोतीति तिङन्तपदार्थं भेदेन (नि)दर्शयति नाप्रतिपद्य भेदम्, पाकादिषु न तथा, भेदप्रतिपत्तेरभावादिति गम्यत इति ॥ अयमर्थः—पचतीत्यस्य तिङन्तस्य [6]पदस्यार्थं भेदेन दर्शयति—पाकं करोतीति ॥ नन्वनेकार्थभेदनिदर्शनेन कथमर्थभेदनिश्चयः? यावता भेदप्रतिपत्तिर्भेदे प्रमाणम्, न भेदेनार्थप्रदर्शनं नाम प्रमाणमस्तीत्याशङ्क्योक्तम्—नाप्रतिपद्य भेदमिति ॥ भेदमप्रतिपद्य नार्थं[7] भेदेन दर्शयति, किन्तु प्रतिपद्यैव । प्रतिपन्नं ह्यर्थं परस्मै प्रतिपादयति, नाप्रतिपन्नम् । तस्मादर्थभेदनिदर्शनादवगम्यते पचतीत्यस्य शब्दस्य द्वावर्थौ प्रकृतिप्रत्ययविभागेन प्रतिपन्नौ, प्रकृत्यर्थः पाकः, प्रत्ययार्थः करोत्यर्थ इति (इति) गम्यते । पाकादिषु घञाद्यन्तेषु पदेषु न तथा भेदेनार्थं[8] निदर्शयति, किन्त्वेक एव, पाक इति कोऽर्थः? विक्लित्तिरिति । तस्मादवगम्यते आख्याते द्वावर्थौ प्रतिपद्यन्ते प्रतिपत्तारः पाकं धात्वर्थं प्रत्ययार्थं च करोत्यर्थम् । घञाद्यन्ते तु [9]नार्थभेदं प्रतिपद्यन्ते, भेदेन निदर्शनाभावादिति । तस्मादाख्यातप्रत्यये सति करोत्यर्थप्रतीतिदर्शनात् [10]तदभावे चादर्शनात्तिङभिधेया भावना, नतु तल्लक्ष्येति सिद्धम् ॥

तत्र शङ्कते—परिकल्प्य भेदं तथोपदर्शनम्, पाकस्याभिनिर्वर्तनं करोतीति यथेति

---

१. दर्शयति—**ख**

२. नचाप्रतिपद्य भेदं पाकादिषु न तथा—**क**; न प्रतिपद्य भेदं पाकादिषु न तथा—**ख.**

३. पत्त्यभावा—**क, ख, ग, घ, ङ.**

४. पाकस्याभिनिर्वर्तनं—**क, ख.** पाकस्या' भिनिवर्तनं—**ग, घ, ङ.**

५. करोति यथेति—**ग, घ, ङ.**

६. पदस्यार्थभेदेन—**च.**

७. पद्यमानार्थं—**छ.**

८. अर्थं दर्शयति किन्त्वेकमेव—**छ.**

९. नार्थभेदः प्रतिपद्यते—**च.**

१०. तदभावेऽदर्शनात्—**च.**

**तीति यथेति चेत्—न, [१]पाकादावनिदर्शनात् । शब्दोपकल्पितस्तिङन्तेष्वपि भेद इति चेत्—अस्तु तावच्छब्दार्थभेदः, [२]वस्तुन्युप पादयिष्यते ।**

---

चेत् इति ॥ अयमर्थः—नैव पचती[३]त्यर्थभेदोऽस्ति, अपि तु एक एव धात्वर्थः, तस्यैव तु बुद्ध्या भेदं परिकल्प्य तथोपदर्शनं—भेदेनोपदर्शनम्, अभिनिर्वर्तनम् करोतीति यथा । नहि तत्र करोत्यर्थादन्या काचिदभिनिर्वर्तना । तत्र बुद्ध्या भेदं परिकल्प्य भेदेन निदर्शनमिति अवश्यं भावनावादिनाप्यभ्युपगन्तव्यम्, तदभाववादिना धात्वर्थे तदाश्रीयते इति चेदिति ॥ अत्रोत्तरमाह—न पाकादावनिदर्शनादिति ॥ पाकादाव(दौ भेदेना)निदर्शनात्, इतरथा पाकादावपि परिकल्पनापूर्वकस्य भेदनिदर्शनस्य प्रसङ्गात् । अतो न कल्पितभेदापेक्षया भेदनिदर्शनम्, अपि तु शब्दार्थभेदप्रतिपत्तिनिबन्धनम्, भेदकल्पनाया ज्ञानरूपत्वान्निरालम्बनत्वानुपपत्तेरित्यभिप्रायः ॥

पुनश्शङ्कते—शब्दोपकल्पितस्तिङन्तेष्वपि भेद इति चेदिति ॥ भवतु भेदनिदर्शनात्तिङन्तेष्वर्थभेदः, स तु न वास्तवः,[४] अपि तु शब्दोपकल्पितः[५]। स एव भेदज्ञानस्यालम्बनम् । तिङन्तेष्वपीत्यपिशब्दस्यायमर्थः—न क्वचिदर्थभेदोऽस्ति तिङन्तेषु घञन्तेषु च; यस्तु तिङन्तेषु प्रतीयते सोऽपि न वास्तव इति ॥ अत्रोत्तरमाह—अस्तु तावच्छब्द(ब्दार्थ)-भेदः, वस्तुन्युपपादयिष्यत इति ॥ अस्तु तावच्छब्दार्थभेदस्तिङन्ते, वास्तवत्वन्तु तस्य अस्तु वा, मा वा । घञन्ते त्वेक एवार्थः। वस्तुन्युपपादयिष्यते भेदः ज्ञानवच्छब्दानामपि स्वव्यतिरिक्तवस्त्वालम्बनत्वात् । अत्र तावच्छब्दः क्रमार्थः प्रयुक्तः । शब्दार्थभेदस्तावदादौ

---

१. पाकादावपि तथा प्रसङ्गात्—**क, ख**; पाकादावपि भेदप्रतिपादनप्रसङ्गात्—**ग, ङ.** पाकाददपि भेदप्रतिपाददपि—**घ.**
२. वस्तुन्युपपादयिष्यायः—**ग, घ, ङ.**
३. 'इति' नास्ति—**च.**
४. भेदः न स तु स न वास्तवः—**च.**
५. कल्पितम्—**च.**

**नन्वेवं भावनाया अपि साध्यरूपायाः [1]प्रतीतेर्भावनान्तरापातः, तदपि [2]तथैवेत्यनवस्था। [3]यदपि मतं [4]व्यापारो हि [5]सा, रूपमेव तस्याः [6]तादृशमपराधीनोपजननम्, [7]अतो रूपात्तथात्व-**

---

सिध्यतु, परवस्त्वर(स्तात्त्व)र्थभेदोऽपि साधयिष्यते। तस्मान्न क्वचिद्भावाभावे करोतेः प्रयोग इति न तस्य धात्वर्थसामान्याभिधायित्वम्, अपि तु भावनाभिधायित्वमेवेति द्वितीयश्लोकोक्तमपि दूषणं परिहृतम् ॥

इदानीं 'सर्वत्र यदि धात्वर्थे भाव्यस्यै(व्यं सै)वास्तु भावना' इति पूर्वोक्तं दूषणमुत्थापयन् पूर्वपक्षवादी चोदयति—नन्वेवं भावनाया अपि साध्यरूपायाः प्रतीतेः भावनान्तरापातस्तदपि तथैवेत्यनवस्थेति ॥ अयमभिप्रायः—[8]यथा तिङन्तेषु धात्वर्थस्य साध्यताप्रत्ययः प्रत्ययाभिधेयभावनासंस्पर्शकृतो न स्वाभाविकः सम्भवतीति प्रत्ययाभिधेया भावना अभ्युपगता, तथा भावनाया अपि साध्यरूपताप्रतीतिर्भावनान्तरसंस्पर्शकृतेति भावनान्तरकल्पनाप्रसङ्गः, तस्या अपि साध्यताप्रतीतिर्भावनान्तरसंस्पर्शकृतेति अनवस्था स्यादिति। अनवस्थादोषपरिहारं शङ्कते—यदपि मतं व्यापारो हि सा, रूपमेव [9]तस्याः तादृशमपराधीनोपजननम्। अतो रूपात्तथात्वसिद्धिर्नान्यसंस्पर्शव्यपेक्षितेति ॥ अयमभिप्रायः—स्वयमेव व्यापाररूपो(पा) भावना, साध्यस्वभावत्वात्। तथाहि—[10]रूपमेव हि तस्यास्तादृशमपराधीनोपजननम्—[11]अपराधीनमस्या उपजननम्। नह्यस्या भावनान्तराधीनं जन्म घटादीनामिव। यथा संवेद्यानां विषयाणां ज्ञानात्संवेदनमन्यज्जायते[12] न तथा संवेदनस्यान्य-

---

१. 'प्रतीतेः' नास्ति—**ग, घ, ङ**.
२. तथैत्यनवस्था—**क, ख, ग, घ, ङ**.
३. यदि मतं—**क, ख, ग, घ, ङ**.
४. व्यापारोऽपि सद्रूपमेव—**क, ख**.
५. सा स्वरूपमेव—**ग, घ**; सारूप्यमेव—**ङ**.
६. तादृशं पराधीनोप—**ग, ङ**; तादृशमपरानोप—**घ**.
७. अतः स्वरूपात्—**ग, घ**.
८. तथा तिङन्तेषु—**छ**.
९. तस्यां—**छ**.
१०. 'रूपमेव हि' नास्ति—**च**.
११. न च पराधीनं—**छ**.
१२. -मन्यज्ज्ञायते—**च**.

**सिद्धिः[१] नान्यसंस्पर्शव्यपेक्षितेति[२], धात्वर्थोऽपि [३]तर्हि तथा अस्तु। तथा हि—[४]सोऽपि वस्तुतस्तथाभवन् न वा आपादित-तथाभावः स्वशब्दैः व्यापारात्मोपादीयते; [५]घञादिष्वपि कारक-सम्बन्धोपपत्तेः, अन्यथा अव्यापारे कारकसम्बन्धायोगात्, अव्यापार[६]सम्बन्धिनः कारकत्वानुपपत्तेः, क्रियासम्बन्धप्रभावितत्वा-**

---

तोऽन्यत्संवेदनम्, स्वभावत एव तथात्वात्। एवं स्वभावत एव भावनायास्साध्यताप्रतीतेः भावनान्तरसंस्पर्शानपेक्षत्वान्नानवस्थाप्रसङ्ग इति। एतन्निराकरोति—धात्वर्थोऽपि तर्हि तथा अस्त्विति॥ एतदेव प्रपञ्चयति—तथा हि—सोऽपि वस्तुतस्तथाभवन् [७]न वा आपादित-तथाभावः स्वशब्दैः व्यापारात्मोपादीयते इति॥ अयमर्थः—यथा भावना (स्व)रूपादेव साध्या न भावनान्तरमपेक्षते, धात्वर्थोऽपि तर्हि तथा अस्तु। तथा हि—सोऽपि वस्तुतस्तथा भवन्—साध्यस्वभावो भवन्, न वा—अतथाभवन्, स्वशब्दैरेवापादिततथाभावः आपा-दितसाध्यभावः व्यापारात्मोपादीयते—यथा ध्वनिश्वैत्यादयः स्निग्ध(सिद्ध)स्वभावा अपि शब्दैरापादितसाध्यभावा व्यापारात्मतयोपादीयन्ते 'ध्वनति घण्टा', 'श्वेतते प्रासादः' इति। एवञ्च सति घञादिष्वपि कारकसम्बन्धोपपत्तिरित्याह—घञादिष्वपि कारकसम्ब-न्धोपपत्तेरिति[८]॥ अयमर्थः—देवदत्तेन काष्ठैः स्थाल्यामोदनस्य पाकः इति पाकशब्दार्थेन काष्ठादीनां कारकत्वेन सम्बन्धो दृश्यमान एवमेवोपपद्यते इति। अव्यापारात्मनि तु धात्वर्थे नायं सम्बन्ध उपपद्यत इत्याह—अन्यथा अव्यापारे कारकसम्बन्धायोगादिति॥ अव्यापारे

---

१. सिद्धेः—**ख, ग, घ, ङ.**
२. व्यपेक्षेति—**ख, ग, घ, ङ.**
३. 'तर्हि' नास्ति—**ङ.**
४. सोऽपि तथाभवन्नवा आपादित—**क**; वस्तुतः सोऽपि तथाभवन् वा आपादित—**ख**; वस्तुतः सोऽपि तथा अतथा वा भवन्नापादित—**ग, घ, ङ.**
५. घञन्तादिष्वपि—**ग, घ, ङ.**
६. संबन्धिना आकारत्वा—**ख.**
७. न वा तथा भवन् भावस्वशब्दैः—**च.**
८. पत्तिरिति—**छ.**

त्कारकभावस्य। बुद्धिभेदस्तु पाकादिषु [1]प्रत्ययोपात्तेन [2]सिद्ध-भावेनाभिभवात्, [3]अनभिभवाच्च पचत्यादौ । [4]तच्चानभिभूतं रूपमन्यथाशक्यनिदर्शनं[5] व्यापारान्तरसंस्पर्शेनैव[6] निदर्शयन्ति[7] भावनाया इव। नच [8]सिद्धसाध्यतयोरैकशब्द्यं[9] विरुद्धम् भेदाभेद-

---

धात्वर्थे कारकसम्बन्धस्यायोगादित्यर्थः। एतदेव प्रपञ्चयति—अव्यापारसम्बन्धिनः कारकत्वानुपपत्तेः क्रियासम्बन्धप्रभावितत्वात्कारकभावस्येति ॥ एतदुक्तं भवति—व्यापारसम्बन्धिन एव कारकत्वम् न सिद्धपदार्थसम्बन्धिनः, राजपुरुषादिष्वदर्शनात्। नच घञन्तादिषु तिङभिधेयो व्यापारोऽस्ति। तस्माद्धात्वर्थ एव धातुना व्यापारात्मा अभिधीयते कारकसम्बन्धोपलब्धेरित्यभिप्रायः। नन्वेवन्तर्हि घञन्ते तिङन्ते च धात्वर्थविषयः सिद्धसाध्यरूपेण बुद्धिभेदो दृश्यमानो विरुध्येत, उक्तन्यायेन सर्वत्र साध्यताप्रतीतिप्रसङ्गादित्याशङ्क्याह—बुद्धिभेदस्तु पाकादिषु प्रत्ययोपादानेन(त्तेन) सिद्धभावेनाभिभवादनभिभवाच्च पचत्यादाविति ॥ अयमाशयः—घञाद्यन्तेषु घञादिप्रत्ययोपात्तेन सिद्धभावेन धात्वर्थसाध्यत्वस्याभिभवात् अनभिभवाच्च पचत्यादौ नोभयत्र बुद्धिभेदो विरुध्यत इति ॥ यच्चार्थभेदनिदर्शनं कारणमुक्तम्, तदप्यन्यथासिद्धत्वान्न धात्वर्थातिरिक्तप्रत्ययाभिधेयभावनासद्भावसाधनायालमित्याह—तच्चानभिभूतं रूपमन्यथाशक्यनिदर्शनं व्यापारान्तरसंस्पर्शेनैव निदर्शयन्ति भावनाया इवेति ॥ अयमर्थः—यद्धात्वर्थस्यानभिभूतं साध्यं रूपम्, न तद्व्यापारान्तरसंस्पर्शमन्तरेण शक्यते निदर्शयितुमिति व्यापारान्तरसंस्पर्शेनैव [10]निदर्शयन्ति, न व्यापारान्तरसत्तया, भावनाया इव—यथा भावनां

---

१. प्रत्ययोपादानेन—क, ख, ग, घ, ङ.
२. सिद्धभावनानुभवात्—ग, घ, ङ.
३. अनभिभवात्पचत्यादौ—क, ख; अनभिभवति चेत्यादौ—ग, घ, ङ.
४. न चानभि—ग, घ, ङ.
५. शक्यनिरूपणं—क, ख; शक्यम् घदर्शनं—ग, घ, ङ.
६. 'एव' नास्ति—क, ख, ग, घ, ङ. निदर्शनेन—ग, घ, ङ.
७. निदर्शयति—ग, घ, ङ.
८. सिद्धतासाध्यतयोः—क, ख; सिद्धसाध्ययोः—ग, घ, ङ.
९. ऐकाधिकरण्यं—क, ख.
१०. निदर्शयति—छ.

**योरिव गोत्वादिषु, भिन्नप्रकृतिप्रत्ययोपादानत्वात्। [1]भाव्यरूपप्रतीतिनिदर्शनाभ्याञ्च[2] धात्वर्थस्य [3]तिङन्तेषु भावनामिच्छतो**

---

करोतीति व्यापारान्तरसंस्पर्शेनैव तस्या अनभिभूतं साध्यरूपं [4]दर्शयन्त्यन्तरेणापि व्यापारान्तरम्, तथेहापीति[5]। नन्वेकधात्वर्थसम्बन्धिनोः सिद्धसाध्यत्वयोरेकेन पाकशब्देनाभिधानं विरुद्धमित्याशङ्क्याह—न च सिद्धसाध्यतयोरैकशब्द्यं विरुद्धम् भेदाभेदयोरिव गोत्वादिष्विति॥ अयमर्थः—गोत्वादिषु भेदाभेदयोरेकशब्दावगम्यत्वं यथा न विरुध्यते तथेहापि सिद्धसाध्यत्वयोरित्यर्थः। शब्दभेदेनापीह विरोधस्सुपरिहर इत्याह—भिन्नप्रकृतिप्रत्ययोपादानत्वादिति॥ पच्यादिकया प्रकृत्या साध्यतोपादीयते, प्रत्ययेन तु घञादिना सिद्धता। अतः शब्दभेदान्न विरोध इत्यर्थः। उक्तञ्चेदमभियुक्तैः—

'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥' इति॥

दृष्टञ्च गोत्वाश्वत्वादिशब्देषु प्रकृतिप्रत्ययभेदेन भेदाभेदाभिधानम्। तत्र हि प्रकृतिभूतेन गवादिशब्देनाभेद उपादीयते, गौः शाबलेय इति व्यक्तिसामानाधिकरण्यदर्शनात्। त्वतलादिना तु प्रत्ययेन गोत्वादेः सामान्यस्य शाबलेयादिव्यक्तिभ्यो भेद उपादीयते, शाबलेयस्य गोत्वमिति वैयधिकरण्यदर्शनादिति। एवं [6]प्रतीतिभेदनिदर्शनयोरन्यथासिद्धत्वान्नार्थभेदसिद्धिरित्युक्तम्। इदानीं तथा अभ्युगमेऽप्यनिष्टमापद्यत इत्याह—भाव्यरूपप्रतीतिनिदर्शनाभ्यां च धात्वर्थस्य तिङन्तेषु भावनामिच्छतो धात्वर्थस्य कर्मत्वप्रसङ्गः, करणत्वं

---

१. साध्यभावरूप—ग, ङ; साध्यरूप्यप्रतीति—घ.
२. 'च' नास्ति—क, ख.
३. 'तिङन्तेषु' नास्ति—ङ.
४. दर्शयन्नन्तरेणापि.
५. 'इति' नास्ति—छ.
६. प्रतीतिः—छ.

**धात्वर्थस्य [1]कर्मत्वप्रसङ्गः, [2]करणत्वं न स्यात् । तस्माद्धात्वर्थ एव व्यापारात्मा [3]स्वशब्दोपादानः [4]फलभवनसमर्थो भावना क्रिया [5]चेति साम्प्रतम् ॥**

**तदेतदसमञ्जसम्[6]—**

**[7]दृश्यमाने वस्तुभेदे नेष्टा शब्दार्थमात्रता ।**
**प्रत्ययार्थेनाभिभवः सिद्धे तद्भावनिश्चये[8] ॥ ३२ ॥**

---

न स्यात् इति ॥ अयमर्थः—धात्वर्थस्य साध्यताप्रतीत्या अर्थभेदनिदर्शनेन च प्रत्ययाभिधेयां भावनामिच्छतां भावनायां कर्मत्वं धात्वर्थस्यानिष्टं प्रसज्यते, करणत्वं चाभिप्रेतं हीयते, कर्मत्वेन प्रतीतिभेदार्थभेदनिदर्शनयोरभ्युपगमात् इति। उपसंहरति—तस्माद्धात्वर्थ एव व्यापारात्मा स्वशब्दोपादानः फलभवनसमर्थो भावना क्रिया चेति साम्प्रतमिति ॥ तस्मात् उक्तेन न्यायेन धात्वर्थ एव भावना; क्रियापि धात्वर्थ एव, न ततोऽर्थान्तरम्; स एव तु फलभवनसमर्थतयोपादानाद्भावनेत्युच्यते, व्यापारात्मनोपादानात्तु क्रियेति (इति) सर्वमुपपन्नम् ॥

तदेतत्सिद्धान्तवादी दूषयति—तदेतदसमञ्जसम्;

[9]दृश्यमाने वस्तुभेदे नेष्टा शब्दार्थमात्रता ।
प्रत्ययार्थेनाभिभवः सिद्धे तद्भावनिश्चयः(ये) ॥ इति ॥

---

१. कर्मता—ख.
२. करणत्वं तु न स्यात्—क, ख; न करणत्वं स्यात्—ग, ङ.
३. धातुशब्दो—ख, ग, घ, ङ.
४. फलभावना—क, ख.
५. 'च' नास्ति—क, ख.
६. 'असमञ्जसम्' तथाहि—क, ख, ग, घ, ङ.
७. विद्यमाने—क, ख.
८. निर्णये—क; निर्णयः—ख, ग, ङ.
९. दृश्यमाने वस्तुमेदे इति—च.

**[1]दर्शयिष्यते ह्यव्यापारात्मनो धात्वर्थाद्भेदवती क्रिया। अतो न शब्दसामर्थ्यविलसितमेवैतदिति युक्तम्[2]। [3]असति वस्तुनि तथा**

---

अयमर्थः—यदुक्तं पूर्वपक्षवादिना शब्दोपकल्पित एवार्थभेदो न वास्तव इति, तदयुक्तम्। वस्तुभेदे दृश्यमाने शब्दार्थत्वमात्रस्य बाह्यवस्तुशून्यस्यानिष्टत्वात्। दृश्यते च धात्वर्थात्प्रत्ययार्थस्य भेदः प्रतीतिभेदनिदर्शनाभ्यामिति। यच्च सिद्धान्तवादिना अनवस्थापरिहाराय स्वयं व्यापाररूपत्वाद्भावनायाः साध्यताप्रतीतौ न व्यापारान्तरापेक्षेत्युक्ते पूर्वपक्षवादिना तत्साम्यं धात्वर्थस्यापादयतोक्तम्—घञाद्यन्तेषु धात्वर्थसाध्यत्वस्याप्रतीतिः प्रत्ययार्थेन सिद्धभावेनाभिभवादुपपद्यत इति, तदप्यनुपपन्नम्। सिद्धे हि धात्वर्थस्य साध्यस्वभावे प्रत्ययार्थेन सिद्धभावेनाभिभवाभिधानं युक्तम्[4]। न च तत्सिद्धौ प्रमाणमस्तीत्यभिप्रायः। एतद्विवृणोति—दर्शयिष्यते ह्यव्यापारात्मनो धात्वर्थाद्भेदवती क्रिया। अतो न शब्दसामर्थ्यविलसितमेवैतदिति युक्तमिति ॥

अयमभिप्रायः—कर्तृकर्मसमवेतसंयोगविभागात्मकगुणविशेषादव्यापारात्मनो धात्वर्थाद्भिन्ना परिस्पन्दादिशब्दवाच्या क्रिया प्रतिपादयिष्यते—

'धातूनामभिधानीयान्कर्तृकर्मसमाश्रयान्।
लब्धात्मनोऽक्रियारूपान्विशेषान्प्रतिजानते ॥'

'उदासीनत्वविच्छेदलक्ष्यं धात्वर्थकारणम्।
स्पन्दव्यापारपर्यायं करोत्यर्थं प्रचक्षते ॥' इत्यत्र।

---

१. दर्शयिष्यते व्यापारात्मनो धात्वर्थाद्भेदवतीति, अतो—**क**; दर्शयिष्यते व्यापारात्मनो धात्वर्थात्मभेदवदिति क्रिया—**ख**;

२. विलसितमेवेदं युक्तम्—**क, ख**; विलसितमिति युक्तम्—**ग, ङ**.

३. असन्निहितवस्तुनि—**ख**.

४. 'युक्तम्' नास्ति—**च**.

**नाम भवेत्। सम्बन्धग्रहणापेक्षत्वाच्च [1]शब्दस्य न [2]वस्तुस्वरूपक्लृप्त्यै विभवः। [3]निश्चिते च धातुभिः [4]भाव्यताया इहोपादाने अभिभवाभिधानं युक्तम्। [5]न च तथा, प्रमाणाभावात्, साधन-**

---

अनेन (अतो न) शब्दसामर्थ्यविलसितमेवेदम्—तिङन्तेष्वर्थभेदप्रदर्शनं (इति) युक्तमिति॥ भवेदपि कदाचिदसति वस्तुनि शशशृङ्गादौ[6] शब्दसामर्थ्यविलसितत्वकल्पना। नेह वस्तुनोऽभावः सिद्ध इत्येतदाह—असति वस्तुनि तथा नाम [7]भवेदिति॥ नचैतदभ्युपगमक्षमम्, क्वचिदपि वस्तुरूपपरिकल्पनायां शब्दस्य सामर्थ्याभावादित्येतदाह—सम्बन्धग्रहणापेक्षत्वाच्च शब्दस्य न वस्तुस्वरूपक्लृप्त्यै विभव इति॥ सम्बन्धग्रहणापेक्षया हि शब्दः कार्यं जनयति, [8]न सत्तामात्रेण[9], तच्च शब्दस्य ज्ञापकत्वेऽवकल्पते, न कारकत्वे। न हि बीजादीनामङ्कुरादिकारकाणां सम्बन्धग्रहणापेक्षा दृश्यते। अतोऽर्थस्य ज्ञापक एव शब्दः, न तन्निर्माणप्रभुरित्यभिप्रायः। खपुष्पादिष्वपि बहिस्सन्त एवार्थाश्शब्दैरभिधीयन्ते, वाक्यार्थात्मना असतामपि तेषां पदार्थात्मना कथञ्चिच्छब्दाद्बुद्धेश्च भेदेन सद्भावोपपत्तेरिति॥

एवं श्लोकस्य पूर्वार्धं व्याख्यायाधुना परार्धं व्याचष्टे—निश्चिते च धातुभिर्भाव्यताया इहोपादानेऽभिभवाभिधानं युक्तम्। न च तथा, प्रमाणाभावादिति॥ अयमर्थः—साध्यस्वभावेऽपि धात्वर्थे घञादिप्रत्ययाभिहितेन सिद्धभावेनाभिभवात्साध्यताया अप्रतीतिर्युक्तेति यदुक्तम्, तदनुपपन्नम्। धातुभिः साध्यताया उपादाने निश्चिते एतदेवं स्यात्। नच तन्निश्चितम्, प्रमा-

---

१. 'शब्दस्य' नास्ति—क, ख.

२. वस्तुरूप—क, ख; वस्तुरूपक्लृप्तौ—ग, ङ; वस्तुक्लृप्त्यै—घ.

३. निश्चिते तु—ग, घ, निश्चितेभिर्भावना-हेयोपादाने सति भावाभिभवाभिधानम्—ङ.

४. भाव्यतयोपादाने—क, ख; भाव्यतयेहोपादाने—ग, घ, ङ.

५. न चेह तथा—ग, घ.

६. शृङ्गारादौ—छ.

७. भवेदपीति—छ.

८. 'न' नास्ति—च.

९. वार्तामात्रेण—छ.

**सम्बन्धस्य[1] गम्यमानभावनाविषयत्वात्, [2]तथापि निदर्शनात् 'शङ्कुलया खण्डः' इति ।**

**[3]विक्लिद्यन्ति पचन्तीति न विशेषः [4]प्रकल्पते ।**
**ऋते व्यापारनानात्वात्कर्तृभेदोऽपि वै कुतः ॥ ३३ ॥**

---

णाभावात् इति ॥ ननु घञन्तादिष्वपि कारकसम्बन्धो दृश्यते काष्ठैः पाक इति । स चैवमुपपद्यते यदि धातुः साध्यतामाचक्षीत, नान्यथा । नहि तत्र प्रत्ययवाच्या भावना अस्तीत्युक्तमित्याशङ्क्याह—साधनसम्बन्धस्य गम्यमानभावनाविषयत्वात्तथापि निदर्शनात् शङ्कुलया [5]खण्डः इ(ती)ति ॥ अयमभिप्रायः—यद्यपि पाकः इत्यादौ नाभिधीयते भावना, तदभिधायकशब्दाभावात्, तथाप्यर्थाद्गम्यते, पाकस्य तदविनाभावात् । गम्यमानभावनाविषयत्वेनापि कारकसम्बन्ध उपपद्यते । यथा 'शङ्कुलया खण्डः' इत्यत्र शङ्कुलया कृतः खण्डः इति गम्यमानकरोत्यर्थविषयः शङ्कुलायाः करणभावः, तथेहापि स्यादिति ।

तदेवं भेदप्रतीतिनिदर्शनयोरन्यथानुपपत्त्या धात्वर्थातिरिक्ता भावना अस्तीति साधितम् । इदानीं एतदेव परपक्षेऽनिष्टप्रसङ्गापादनद्वारेण दर्शयति—

[6]विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्पते ।
ऋते व्यापारनानात्वात्कर्तृभेदोऽपि वै कुतः ॥ इति ॥

अयमर्थः—यद्येक एवार्थः साध्यतया धातुनोपादीयेत, [7]न च परं व्यापारं प्रत्यय आचक्षीत, तदा (वि)क्लिदिपचिभ्यां विक्लित्तेरेवोपादानादर्थान्तरस्य चाभावात् विक्लिद्यन्ति

---

१. संबन्धस्य च—**ख.**
२. तथा दर्शनात्—**ग, घ, ङ.**
३. किञ्च–विक्लिद्यन्ति—**ख, ग, घ, ङ.**
४. प्रकल्प्यते—**ग, घ, ङ.**
५. 'न' अधिकं वर्तते—**छ.**
६. विक्लिद्यन्तीति—**च.**
७. नचापरं—**छ.**

**न तावत्तिङन्तेषु धात्वर्थ एव व्यापारात्मोपादीयते, विक्लिद्यन्ति पचन्तीति [१]धात्वर्थाभेदात्प्रत्ययाभेदप्रसङ्गात् । कर्तृभेदान्नैवमिति चेत्—न, व्यापारभेदमन्तरेण तदनुपपत्तेः[२] । यथा साधनानां नियोक्तृत्वे कर्तृलक्षणे यज्ञदत्तादय एव [३]कर्तारो न तण्डुलाः, अभिधीयमानव्यापारत्वे तु तण्डुला एव[४]। अनेन भिनत्ति, [५]दलति,**

पचन्तीति प्रतीतिविशेषो न स्यात् । (वि)क्लिदौ तण्डुलाः कर्तारः, पचौ तु देवदत्तादयः कर्तारः इति प्रतीतिभेदो भविष्यतीति चेन्न । धात्वर्थाद्यतिरिक्तेन(क्तात्) विना कर्तृभेदस्यानुपपत्तेरिति श्लोकस्यार्थः । अस्यैव प्रपञ्चः—न तावत्तिङन्तेषु धात्वर्थ एव व्यापारात्मोपादीयते विक्लिद्यन्ति पचन्तीति धात्वर्थभेदात्प्रत्ययाभेदप्रसङ्गादिति । अनेन श्लोकपूर्वार्धस्यार्थः प्रपञ्चितः । नात्र तिरोहितमिव किञ्चिदस्ति । उत्तरार्धव्यावर्त्यामाशङ्कां दर्शयति—कर्तृभेदान्नैवमिति चेदिति ॥ अयमर्थः—कर्तृभेदात्क्रियाभेदः, ततश्च विक्लिदिपच्योरर्थभेदः । तथा हि—पचन्तीत्यत्र देवदत्तादयः कर्तारः, विक्लियन्तीत्यत्र तु तण्डुलाः। अतः कर्तृभेदाद्व्यापारभेदः ततश्च बुद्धिभेदोऽप्युपपद्यते इति । अत्रोत्तरमाह—न, व्यापारभेदमन्तरेण तदनुपपत्तेरिति ॥ व्यापारभेदमन्तरेण तत्र कर्तृभेदस्यानुपपत्तेर्न कर्तृभेदात्प्रत्ययभेद उपपद्यत इति । एतदेव प्रपञ्चयति—यथा साधनानां नियोक्तृत्वे कर्तृलक्षणे यज्ञदत्तादय एव कर्तारो न तण्डुलाः । अभिधीयमानव्यापारत्वे तु तण्डुला एवेति ॥ अयमर्थः—अत्र कर्तृभेदं वदता इदं वक्तव्यम्, किं साधनानां नियोक्तृत्वं कर्तृलक्षणम् ? कि वा धातुना अभिहितव्यापारत्वम् ? आद्ये कल्पे यज्ञदत्तादय एव कर्तारो न तण्डुलाः, तेषामचेतनत्वात् साधननियोगा-

१. धात्वर्थभेदात्—**ख**.
२. -पत्तेः । तथाहि साधननियोक्तृत्वे—**क, ख** ; साधनानां नियोक्तृत्वे—**ग, घ, ङ**.
३. कर्तारो न अभिधीयमान—**ख** ; कर्तारो न तण्डुलाः । अगुणतया धातुना अभिमान—**ग, घ, ङ**.
४. एव कर्तारः । एतेन—**क, ग, घ, ङ** ; एव । एतेन—**ख**.
५. विदलति—**ग, घ, ङ**.

**छिनत्ति, द्विधाभवतीत्यादयो व्याख्याताः। तस्माद्धात्वर्थातिरिक्तो व्यापार उपेयः, यत्कृतोऽर्थभेदः कर्तृभेदश्च ॥**

**अपरः कल्पः—स्यान्मतं[१]कर्मसमवायिक्रियेष्वेव धात्वर्थातिरिक्तो व्यापारो[२] गम्यते। कर्तृस्थक्रियेषु कथम्[३]?। उच्यते—**

---

योगात्। द्वितीये तु कल्पे उभयत्रापि तण्डुला एव कर्तारः स्युः। (वि)क्लिदिना पचिना च विक्लित्तिलक्षणस्य तद्व्यापारस्याभिधानात्। विक्लिद्यन्ति पचन्तीत्यत्रोपदिष्टं बुद्धिभेदाभावप्रसङ्गं विषयान्तरेऽतिदिशति—अनेन भिनत्ति, दलति, छिनत्ति, द्विधाभवतीत्यादयो व्याख्याता इति॥ उपसंहरति—तस्माद्धात्वर्थातिरिक्तो व्यापार उपेयो यत्कृतोऽर्थभेदः कर्तृभेदश्चेति॥ तस्मादुक्तदोषपरिहाराय धात्वर्थव्यतिरिक्तो व्यापारोऽभ्युपगन्तव्यः, येनार्थभेदः कर्तृभेदश्च भवेत्। कथं पुनः व्यापारान्तराभ्युपगमेऽर्थभेदः कर्तृभेदश्च? उच्यते। यद्यपि क्लिदेः पचेश्च विक्लित्तिलक्षणोऽर्थः समानः तथापि विक्लिद्यन्तीत्यस्मिन्पदे विक्लित्तिपदार्थाव(द)धिकः[४]स्थाल्युदरपरिभ्रमणादिलक्षणः[५] तण्डुलसमवाय्यन्यो व्यापार उपादीयते। अतो विक्लित्तिवत्सोऽपि प्रतीयते। तण्डुलानां च कर्तृत्वं गम्यते। पचन्तीत्यत्र देवदत्तादिसमवाय्यधिश्रयणादिलक्षणो विक्लित्तिव्यतिरिक्तोऽन्योऽपि व्यापारो विक्लित्तिवदुपादीयते। देवदत्तादयश्च कर्तारः प्रतीयन्ते। एवं भिनत्ति, दलति, छिनत्ति, द्विधा भवतीत्यादि द्रष्टव्यम्। अतोऽर्थभेदकर्तृभेदावस्मत्पक्ष एवोपपद्येते॥

इदानीं 'ऋते व्यापारे' त्यादिश्लोकोत्तरार्धव्याख्यानान्तरं विकल्पेन दर्शयितुमाह—अपरः कल्प इति॥ अपरो व्याख्याप्रकारः प्रदर्श्यत इत्यर्थः। तत्र प्रथमं [६]तद्व्यावर्त्यामाशङ्कां दर्शयति—स्यान्मतं कर्मसमवायिक्रियेष्वेव धात्वर्थातिरिक्तो व्यापारो गम्यते,

---

१. कर्मसमवेत—ख.
२. व्यापारोऽभ्युप—ग, घ, ङ.
३. कथमिति—क, ख, ग, घ, ङ.
४. वधिकस्थाल्यु—छ.
५. लक्षणतण्डुल—छ.
६. तावद्व्यावर्त्या—च.

**ऋते व्यापारनानात्वात्कर्तृभेदोऽपि वै कुतः ? ।**

**'ऋत्विजो यजन्ति' 'यजते यजमानः' इत्यगुणतो धातुना [1]अभिधीयमानव्यापारस्य कर्तृत्वात् सङ्कल्पविशेषस्य [2]च यज्यभिधेयस्य यजमानव्यापारत्वात् 'यजन्ति याजकाः' इत्यनुपपत्तिः । धात्वर्थातिरिक्तव्यापारप्राधान्यविवक्षायां [3]तूपपद्यते । नन्वनभि·**

---

कर्तृस्थक्रियेषु कथमिति ॥ अयमर्थः—विक्लिद्यन्ति पचन्तीत्यादौ बुद्धिभेदलक्षणो (यो) हेतुः विक्लित्त्यादिधात्वर्थातिरिक्तव्यापारप्रसाधनायोपन्यस्तः, स न सार्वत्रिकः । ये कर्मसमवायिक्रियाः पचत्यादयः तेष्वेवानेन हेतुना धात्वर्थातिरिक्तो व्यापारो गम्यते । ये पुनः कर्तृस्थक्रियाः आस्ते, शेते, [4]यजतीत्येवमादयः तेषु कथं धात्वर्थातिरिक्तो व्यापारो गम्यते ? नहि तत्रायं हेतुर्विद्यत इति । एतन्निराकरणाय श्लोकोत्तरार्धमवतारयति—उच्यते·—ऋते व्यापारनानात्वा[5]त्कर्तृभेदोऽपि वै कुतः इति ॥ यजत्यादौ व्यापारनानात्वादृते कर्तृभेदः ऋत्विग्यजमानभेदेन दृश्यमानो नोपपद्यत इति । अस्यार्थस्य स्पष्टीकरणायाह—ऋत्विजो यजन्ति, यजते यजमानः इत्यगुणतो धातुना [6]अभिधीयमानव्यापारस्य कर्तृत्वात्सङ्कल्पविशेषस्य च यज्यभिधेयस्य[7] यजमानव्यापारत्वात् यजन्ति याजका इत्यनुपपत्तिः । धात्वर्थातिरिक्तव्यापारप्राधान्यविवक्षायान्तूपपद्यत[8] इति ॥ अयमर्थः—'ऋत्विजो यजन्ति', 'यजते यजमानः' इत्यृत्विजां यजमानस्य च यजत्यर्थे कर्तृत्वं दृश्यते । तत्र धात्वर्थातिरिक्तव्यापारान्तरस्याभिधेयस्यानभ्युपगमे यजन्ति याजका इति नोपपद्यते । कुतः? अगुणतो धातुना अभिधीयमानव्यापारस्य कर्तृत्वात् । यस्य हि व्यापारो धातुना प्राधान्येनाभिधीयते स कर्तेति

---

१. विधीयमा(न)व्यापारस्याकर्तृ—ङ.
२. 'च' नास्ति—क, ख.
३. 'तु' नास्ति—ङ.
४. यजतीत्यादयः—छ.
५. नानात्वादिति—च.
६. अभिधेयस्य—छ.
७. 'च' अधिकं वर्तते—च, छ.
८. इत्यर्थः—च.

**धानेऽपि व्यापारभेदस्य[१] द्रव्यपरित्यागसङ्कल्पमात्रस्याभिधानेऽपि यजतिना स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदः करणभेद इवातिशयविवक्षाभेदादुपपद्यते। किमिदं स्वातन्त्र्यम्? साधनानां [२]नियोक्तृ-**

---

कर्तृलक्षणम्। साधननियोगस्य [३]कर्तृलक्षणत्वे तण्डुलादीनामचेतनानां कर्तृत्वाभावप्रसङ्गात्। अत्र च द्रव्यत्यागसङ्कल्पो यज्यभिधेयो यजमानस्य व्यापारः नर्त्विजाम्[४]। अतः तेषां धातुना अभिधीयमानव्यापारस्य कर्तृलक्षणस्य (अ)भावात् 'यजन्ति याजकाः' इत्यनुपपत्तिः। यदा पुनः धात्वर्थातिरिक्तो व्यापारः तन्निर्वर्तन[५]समर्थः प्राधान्येन प्रतिपाद्यते तदोपपद्यते, यजमानगतसङ्कल्पविशेषनिर्वर्तन[६]समर्थस्य व्यापारस्य ऋत्विक्ष्वपि भावात् तत्र तेषां कर्तृत्वोपपत्तेरिति। [७]तत्र चोदयति—नन्वनभिधानेऽपि व्यापारभेदस्य द्रव्यपरित्यागसङ्कल्पमात्रस्याभिधानेऽपि यजतिना स्वातन्त्र्यविवक्षाभेदात् कर्तृभेदः करणभेद इवातिशयविवक्षाभेदादुपपद्यत इति॥ अयमर्थः—अनभिधानेऽपि व्यापारभेदस्य, द्रव्यपरित्यागसङ्कल्पमात्रस्याभिधानेऽपि यजतिना स्वातन्त्र्यविवक्षाभेदात्कर्तृभेद उपपद्यते। यदा यजमानस्य स्वातन्त्र्यं विवक्ष्यते तदा यजमानस्य कर्तृत्वम्, यदा तु ऋत्विजां स्वातन्त्र्यं विवक्ष्यते तदा तेषां कर्तृत्वम्, यथा साधकतमत्वविवक्षाभेदात्करणभेदः—[८]यदा हि छेदने परशोः साधकतमत्वं विवक्ष्यते तदा 'परशुना छिनत्ति' इति परशोः करणत्वं प्रतीयते। यदा तु हस्तस्य, तदा तस्य करणत्वम्, हस्तेन छिनत्तीति। एवमत्रापि धात्वर्थातिरिक्तव्यापारा(न)भिधानेऽपि धात्वर्थ एवैकस्मिन्स्वातन्त्र्यविवक्षाभेदादृत्विजां यजमानस्य च कर्तृत्वमुपपद्यत इति॥

एतन्निराकर्तुं स्वातन्त्र्यलक्षणं पृच्छति—किमिदं स्वातन्त्र्यमिति। अत्र परं(रः)

---

१. व्यापारभेदस्य स्वातन्त्र्यविवक्षाभेदात्कर्तृभेदः—**ग, घ, ङ.**
२. नियोजकत्वम्—**ङ.**
३. कर्तृलक्षणत्वेन—**च.**
४. नर्त्विजादतः—**च.**
५. समर्थ—**च.**
६. समर्थव्यापारस्य—**च.**
७. 'तत्र' नास्ति—**च.**
८. यथा हि—**च.**

**त्वम् । काष्ठादीनि पचन्तीति कथम्? नियोज्यान्तराभावात् [1]नियोगविवक्षया प्रयोगो न स्यात् । तस्मात्प्राधान्येन प्रतिपाद्यमानव्यापारता स्वातन्त्र्यमित्यास्थेयम्[2] । तथा चोक्तम्—'[3]स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा' इति ॥**

---

परिहारमाह—साधनानां नियोक्तृत्वमिति ॥ कारकान्तरनियोक्तृत्वं स्वातन्त्र्यमित्यर्थः । एतत्स्वातन्त्र्यलक्षणं दूषयितुमाह—काष्ठादीनि पचन्तीति कथमिति ॥ काष्ठादीनि सर्वाणि कारकाणि पचन्तीति प्रयोगोऽस्मिन्पक्षे कथम्? न कथञ्चिदप्युपपद्यत इत्यर्थः । का अत्रानुपपत्तिरिति चेत् तत्राह—नियोज्यान्तराभावान्नियोगविवक्षया प्रयोगो न स्यादिति ॥ अयमर्थः—काष्ठादीनीत्यादिशब्देन सर्वेषां कारकाणां नियोक्तृपक्षनिक्षेपात् नियोज्यान्तरस्याभावात् नियोज्याभावे च नियोक्तृत्वविवक्षानुपपत्तेः योऽयं सर्वेषां काष्ठादीनां नियोगविवक्षया प्रयोगः पचन्तीति कर्तृप्रत्ययान्तस्य शब्दस्य, स न स्यात् । तस्मान्नेदं स्वातन्त्र्यलक्षणं सम्भवति । किं पुनस्तदित्यपेक्षायामाह—तस्मात्प्राधान्येन प्रतिपाद्यमानव्यापारता [4]स्वातन्त्र्यमित्यास्थेयमिति ॥ एतदेव च स्वातन्त्र्यलक्षणं महाभाष्यकृताप्यङ्गीकृतमित्याह—तथा चोक्तम्—स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रेति ॥ अत्र हि स्थालीगतस्य व्यापारस्य प्राधान्येन कथने सति स्थाल्याः स्वतन्त्रता भवतीत्यभिधानात्प्राधान्याभिहितं(त)व्यापारत्वं स्वातन्त्र्यलक्षणमङ्गीकृतमिति गम्यते ।

नन्वस्मिन्नपि स्वातन्त्र्यलक्षणे काष्ठादीनि पचन्तीति प्रयोगानुपपत्तिः समाना, प्राधान्याभिहितव्यापारत्वस्यापि तत्राभावात् । अप्रधानापेक्षं हि प्रधानम् । न चेह कस्यचिदपि व्यापारोऽप्राधान्येनाभिधीयते, सर्वेषां काष्ठादिव्यापाराणां तुल्यवदभिधानात् । तस्मान्नेदमपि

---

१. नियोक्तृत्वविवक्षया—क, ख; नियोक्तृत्वविवक्षाप्रयोज्ये—ग, घ; नियोक्तृत्वविवक्षाप्रयोगो—ङ.

२. 'इत्यास्थेयम्' नास्ति—ग, घ, ङ.

३. स्थालीस्थे प्रयत्ने—ग, घ; स्थालीस्थायत्वेन कथ्यमाने—ङ.

४. स्वातन्त्र्यमित्यस्त्वयमिति—छ.

**भवतु व्यापारभेदः, (स च) [१]धातूपादान एवास्तु। [२]तथा च [३]पचिना [४]देवदत्तादिव्यापारोपादानात् [५]विक्लिदिना चानुपादानात् '[६]विक्लिद्यन्ति' 'पचन्ति' इत्यर्थभेदकर्तृभेदौ। [७]यजिना च**

---

स्वातन्त्र्यं कर्तृलक्षणं सम्भवतीति। अत्रोच्यते। अगुणभावमात्रमिह प्राधान्यमुच्यते, तच्च काष्ठादि[८]व्यापारेष्वप्यस्तीति 'काष्ठादीनि पचन्ति' इति प्रयोगोपपत्तिरिति॥

इदानीं प्रतिपादितं व्यापारभेदमभ्युपगम्य तस्य प्रत्ययाभिधेयतामसहमानः [९]परः प्रत्यवतिष्ठते—भवतु व्यापारभेदः, (स च) धातूपादान एवास्त्विति॥ अत्रायमर्थः—भवतु व्यापारद्वयाभिधेयत्वं पच्यादौ; तच्च धात्वभिधेयमेवास्तु न प्रत्ययाभिधेयम्, प्रत्ययाभिधेयस्तु कर्ता कर्तृसङ्ख्या वेत्यभिप्रायः। अस्मिन्नपि पक्षे 'विक्लिद्यन्ति' 'पचन्ति' इत्यर्थभेदकर्तृभेदौ न विरुध्येते इत्याह—तथा च पचिना देवदत्तादिव्यापारोपादानाद्विक्लिदिना चानुपादानात् 'विक्लिद्यन्ति' 'पचन्ति' इत्यर्थभेदकर्तृभेदाविति॥ अयमर्थः—योऽयं देवदत्ताद्याश्रितो व्यापारोऽधिश्रयणादिः सोऽपि पचिनोपादीयते, न तण्डुलाश्रितविक्लित्तिमात्रम्। (वि)क्लिदिना तु विक्लित्तिमात्रमेवाभिधीयते, न पुनर्देवदत्तव्यापारोऽधिश्रयणादिरपीत्यर्थभेदकर्तृभेदावुपपद्येते इति। भवत्ये(त्वे)वं कर्मस्थक्रियेषु पचत्यादिषु कर्तृभेदः। कर्तृस्थक्रियेषु तु यजत्यादिषु 'यजते यजमानः' 'यजन्ति याजकाः' इत्येवं प्रतीयमानः कर्तृभेदः कथमुपपद्यते। नहि तत्रैवंविधो भेदहेतुरस्तीत्याशङ्कापाकरणायाह—यजिना

---

१. धातूक्त एव सः—क, ख; धातूपादान एव तु सः—ग, घ, ङ.
२. तथा हि—ग, घ.
३. पचतिना—क, ख.
४. देवदत्तव्यापारो—क, ख, ग, घ, ङ.
५. 'विक्लिदिना चानुपादानात्' नास्ति—क; विक्लिदिना अनुपादानात्—ख; विक्लित्तिना अनुपादानात्—ङ.
६. विक्लिद्यन्तीत्यर्थ—क, ख.
७. यजतिना—ग, घ, ङ.
८. व्यापारेष्वस्तीति—च.
९. परं—छ.

**[1]ऋत्विजां व्यापारस्य [2]तादर्थ्यादभिधानादृत्विजां कर्तृत्वोपपत्तिः। [3]यथोक्तम्—'तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा [4]युक्तं तत्सर्वं [5]पच्यर्थः' इति ॥**

**[6]नैतत्सारम्—**

---

चर्त्विजां व्यापारस्य तादर्थ्यादभिधानात् ऋत्विजां कर्तृत्वोपपत्तिरिति। यजमानगतसङ्कल्पविशेषवाचिना यजिना ऋत्विग्व्यापारस्यापि तादर्थ्यात्तन्निर्वर्तनार्थत्वात् अभिधानम्, ततश्चाभिधीयमानव्यापारत्वादृत्विजां कर्तृत्वोपपत्तिः। यजमानव्यापारवचनतया प्रसिद्धेन यजिना तद्व्यतिरिक्तस्यर्त्विग्व्यापारस्यापि [7]तादर्थ्यादभिधानं सम्भवति इत्येतद्भाष्यग्रन्थोदाहरणेन द्रढयति—यथोक्तम्—तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा, युक्तं तत्सर्वं पच्यर्थ इति—(इति)॥ अस्यायमर्थः—तदभिसन्धिपूर्वकं पाकाभिसन्धिपूर्वकं यत्प्रेषणादि[8] क्रियते, तत्सर्वं पाकार्थत्वात्पच्यर्थ इति युक्तमिति। तत्र 'हेतुमति च' इति सूत्रस्यार्थविचारावसर(रे प्रेषणादेरपि धात्वर्थत्वसंभव) प्रदर्शनायेदमुक्तम्। एवं हि तत्र विचारः कृतः—हेतुमति चेति सूत्रस्य कोऽर्थः? किं हेतुमति वर्तमानाद्धातोः णिजिति, किं वा हेतुमत्यभिधेये णिजिति। तत्र धातोरेव हेतुमति वर्तमानत्वं भवतीति प्रतिपादनेन [9]विचारार्हत्वमस्यार्थस्य प्रदर्शयितुं पाकव्यतिरिक्तस्य तदभिसन्धिपूर्वकस्य प्रेषणादेरपि पच्यर्थत्वमुक्तम्। अतो यजिना यजमानव्यापारवाचिना तादर्थ्यादृत्विग्व्यापाराभिधानसम्भवादृत्विजां [10]यजत्यर्थे कर्तृत्वोपपत्तिरिति साधूक्तम्। ततश्च धात्वर्थातिरिक्तप्रत्ययाभिधेयो व्यापारो नास्तीति स्थितम्।

एतन्निराकरोति—(नैतत्सारम्)—

---

१. ऋत्विग्व्यापारस्य—क, ख, ग, घ, ङ.
२. तादर्थ्याभिधानात्—क, ख; तादर्थ्येना-
३. तथा चोक्तम्—ख, ग, घ.
४. यत्तत्सर्वं—क, ख, ग, घ, ङ.
५. पचत्यर्थः—ख.
६. तन्न—क, ख.
७. सामर्थ्यादभि—छ.
८. प्रेषणं—च.
९. विचार्यत्वमस्य—छ.
१०. 'यजत्यर्थे'—नास्ति—च.

**विक्लित्तिमात्रसङ्कल्पविशेषैकावलम्बनौ ।**
**[१]ज्ञायमानतदर्थत्वा[२]न्नेष्टावन्याभिधायिनौ ॥ ३४ ॥**

**[३]'पाकः' 'यागः' इति [४]विक्लित्तिमात्रं सङ्कल्पमात्रं चाचक्षाते [५]पचियजी, न [६]तदतिरिक्तं कर्तृव्यापारम्, पाकस्य [७]क्रिये-**

---

[८]विक्लित्तिमात्रसङ्कल्पविशेषैकावलम्बनौ ।
ज्ञायमानतदर्थत्वान्नेष्टावन्याभिधायिनौ ॥ (इति) ॥

विक्लित्तिमात्रं सङ्कल्पविशेष[९]श्चैकोऽवलम्बनं ययोस्तावेतौ विक्लित्तिमात्रसङ्कल्पविशेषैकावलम्बनौ पचियजी। विक्लित्तिमात्रमिति मात्रशब्देन विक्लित्तिव्यतिरिक्तस्य देवदत्ताद्याश्रितस्याधिश्रयणादेः पचिवाच्यत्वं व्यावर्तितम्। सङ्कल्पविशेषैकेत्यत्रैकशब्देन तद्व्यतिरिक्तस्यर्त्विग्व्यापारस्य यजिवाच्यत्वं व्यावर्तितम्। कथं पुनरन्य(न)योरेतावन्मात्रार्थत्वमवधारितम्? घञन्तयोस्तथात्वावधारणात्। ननु घञन्तयोस्तावन्मात्रार्थत्वेऽपि तिङन्तयोरर्थान्तरवचनत्वं कस्मान्नेष्यते? यथा अक्षादिशब्दानां क्वचित्प्रयोगेऽवगतादर्थादर्थान्तरवचनत्वं प्रयोगान्तरे गृह्यते तद्वदित्याशङ्कापाकरणायोक्तम्—ज्ञायमानतदर्थत्वादिति ॥ स एवार्थस्तदर्थः स ज्ञायमानः प्रत्यभिज्ञायमानः घञन्ततिङन्तयोः प्रयोगयोः पचियज्योर्दृश्यते। अतो नान्यार्थवाचिनाविष्टाविति श्लोकस्यार्थः। अस्यैव स्पष्टीकरणायाह—'पाकः', 'यागः' इति विक्लित्तिमात्रं सङ्कल्पमात्रं चाचक्षाते पचियजी, न तदतिरिक्तं कर्तृव्यापारम्, पाकस्य क्रियेत्यनिदर्शनात् इति ॥ अयमर्थः—'पाकः' इत्यत्र तावत्प्रयोगे (पचिः) विक्लित्तिमात्रमाचष्टे,

---

१. यजमानतदर्थत्वात्—क, ख.
२. नैष्टापत्त्यभिधायिनौ—क.
३. भावाभिधायिनौ पाको याग इति—ग, घ, ङ.
४. विक्लितिमात्रं चाचक्षाते—ख; विक्लित्तिसंकल्पमात्रवादिनीति—ङ.
५. पचतियजती—ग, घ.
६. तदतिरिक्तौ कर्तृव्यापारौ—ख, ग, घ, ङ
७. क्रिया सिद्धेत्यनिदर्शनात्—ग, ङ; क्रियासिद्धेत्यनित्यदर्शनात्—घ.
८. विक्लित्तीति—च.
९. श्चैकावलंबनं—छ.

न तद्व्यतिरिक्तमधिश्रयणादिकं कर्तृव्यापारम्; 'यागः' इत्यस्मिन्प्रयोगे यजिरपि यजमानगतं द्रव्यत्यागसङ्कल्पमात्रम्, न तद्व्यतिरिक्तमृत्विग्व्यापारम्। कथं गम्यते? पाकस्य क्रियेत्यर्थभेदनिदर्शनाभावात्। यथा 'पचति' इत्यस्य पाकं करोतीति भेदेनार्थो निदर्श्यते न तथेह निदर्श्यते, किन्तु एक एव विक्लित्तिरिति। अतस्तत्र विक्लित्तिमात्रमर्थ इति ॥

का पुनरियं विक्लित्तिर्नाम? यत्र पाकशब्दो वर्तते। उच्यते। उदकसंसक्ताग्न्यवयवाभिघातेन तण्डुलेषु कर्मोत्पद्यते; ततश्च तदवयवेषु विभागलक्षणो गुणविशेष उत्पद्यते; पुनश्च तेनैव हेतुना प्रशिथिलसंयोगलक्षणो गुण उत्पद्यते; स विक्लित्तिशब्देनोच्यते पाकशब्देन च। तस्य चौदनं प्रति प्रत्यासन्नत्वात्करणत्वमुपपद्यते [1]कर्मफलत्वाच्च तस्य तद्द्वारेण काष्ठादिभिः कारकैः सम्बन्धः इति ॥

अन्ये तु मन्यन्ते—तण्डुलावयवगतं [2]कर्मैव विक्लेदनमिति, साक्षात्कारकसम्बन्धोपपत्तेः। तस्य चौदनं प्रति करणत्वं संयोगविभागद्वारेण समर्थयन्ति।

ननु विक्लित्तिरेव चेत्पाकशब्दस्यार्थः कथं तदभावे प्रयोगः? दृश्यते चेष्टकाः पचन्तीति। न चेष्टकासु विक्लेदनमस्ति। तस्मादेक एव पाकशब्दस्यार्थो ग्राह्यः। उच्यते—पच्यमानद्रव्यावयवसंयोगविभागौ पचिर्न व्यभिचरति, इष्टकादिष्वपि तयोर्भावात। विक्लित्तिस्तु पच्यर्थविशेषः। न सर्वः पच्यर्थो विक्लित्तिरेव। नहि यत्र पचिः प्रयुज्यते तत्र सर्वत्र विक्लिदिः प्रयुज्यते, किन्तु संयोगविभागविशेष एव तण्डुलाद्यवयवसमवायिनि प्रयुज्यते 'विक्लिद्यन्ति तण्डुलाः' इति, न पुनः 'इष्टका विक्लिद्यन्ति' इत्यादिप्रयोगो दृश्यते। अत्र पचेः विक्लित्तिमात्रार्थत्वाभिधानं विशेषाभिप्रायं द्रष्टव्यम्।

अपरे तु सन्तापनं पच्यर्थमाहुः। किं पुनः सन्तापनं नाम? अग्निना तण्डुलादीनां संयोगः। अस्मिन्नपि पक्षे, विक्लित्तिरपि तद्विशेष एव। सर्वथापि तण्डुलादिकर्मकारक-

१. कर्मत्वाच्च—छ. २. तमेव विक्लेदं इति—च.

**त्यनिदर्शनात् ।**

**तथा 'पच्यन्ते तण्डुलाः स्वयमेव' 'यजते यजमानः' इति,**

---

समवायी पचेरर्थः[१], न देवदत्तादिसमवाय्यधिश्रयणादिः। कथं पुनस्तण्डुलादिसमवायिनि पच्यर्थे देवदत्तस्य कर्तृत्वम् 'पचति देवदत्तः' (इति)? इति चेत्—उच्यते। असमवेतस्यापि देवदत्ते पचत्यर्थस्य तदधीनात्मलाभवत्त्वात्[२] तत्कर्तृ(क)त्वं न विरुध्यते। कथं पुनरक्रियात्मके पच्यर्थेऽभ्युपगम्यमाने तस्य कारकसम्बन्ध इति चेत्—अस्योत्तरं 'परोपाधिक्रियारूपः' इत्यत्र वक्ष्यते। अतः पाकयोगशब्दयोः विक्लित्तिमात्रं सङ्कल्पमात्रं चार्थः नान्यः कर्तृव्यापार इत्यनवद्यम् ।

ननु घञन्तस्य पच्यादेः विक्लित्तिमात्राद्यर्थत्वेऽपि आख्यातसम्बन्धिनस्तस्य विक्लित्त्यादिव्यतिरिक्तः कर्तृव्यापारोऽप्यर्थ एव। तथा पचतीत्युक्ते न विक्लित्तिमात्रं प्रतीयते, किन्तु तद्व्यतिरिक्तः कर्तृव्यापारोऽधिश्रयणादिः। ततः सोऽपि तदर्थ एव भवितुमर्हतीति यत्कैश्चिदुच्यते, तन्निराकरणायाह—तथा 'पच्यन्ते तण्डुलाः स्वयमेव', 'यजते यजमानः' इति [३]तन्मात्रस्यैव तद्व्यापारत्वाभ्युपगमादिति। अयमर्थः—'पच्यन्ते तण्डुलाः स्वयमेव' इति कर्मकर्तृविषयोऽयं (यः) पचिः, यश्च 'यजते यजमानः' इति यजमानकर्तृविषयो यजिः, तावाख्यातप्रत्ययान्तावपि विक्लित्तिमात्रं सङ्कल्पमात्रं चाचक्षाते इत्यभ्युपगन्तव्यम्। तत्र हेत्वपेक्षायामुक्तम्—तन्मात्रस्यैव तद्व्यापारत्वाभ्युपगमादिति॥ तन्मात्रस्य विक्लित्तिमात्रस्य सङ्कल्पमात्रस्य च, तद्व्यापारत्वाभ्युपगमात् कर्तृव्यापारत्वाभ्युपगमात्। नहि तत्र तद्व्यतिरिक्तः कर्तृव्यापारोऽभिधेयोऽभ्युपेयते भवता। अस्माभिस्तु तत्रापि विक्लित्त्यादिधात्वर्थैकार्थसमवाय्यन्यः कर्तृव्यापारः प्रत्ययाभिधेयः उपेयत एव। तस्मात्पचियज्योर्घञन्तयोः

---

१. पचेरर्थो हि देव—च.

२. लाभत्वात्—छ.

३. 'तन्मात्रस्यैव' इत्यारभ्य 'यश्च यजते यजमानः इति' पर्यन्तो ग्रन्थः नास्ति च-मातृकायाम्।

**तन्मात्रस्यैव [1]तद्व्यापारत्वाभ्युपगमात्। तथा च 'पचति देवदत्तः', 'यजन्ति याजकाः' इति प्रज्ञायमान[2]तदर्थस्य नार्थान्तरविषयत्वं युक्तम्।**

**[3]अव्यभिचाराद्धि [4]तावन्मात्रमर्थः, नाधिकम्, व्यभिचारात्, शब्दान्तरनिबन्धनत्वाच्च, [5]प्रत्ययागमे हि प्रतीयमानः तदर्थ[6] एव**

---

आख्यातप्रत्ययान्तयोरपि कर्मकर्तृ[विषययो]र्यजमानकर्तृविषययोः[7] विक्लित्तिमात्रसङ्कल्प-[8]विशेषैकालम्बनत्वस्याभ्युपेयत्वान्नार्थान्तरवचनत्वमन्यत्रापि युक्तमिति। एतद्दर्शयति— तथा च पचति देवदत्तो यजन्ति याजकाः इति प्रज्ञायमानतदर्थस्य नार्थान्तरविषयत्वं युक्तमिति। अत्र प्रज्ञायमानतदर्थत्वं हेतुत्वेनोक्तम्। पाको यागः, पच्यन्ते स्वयमेव तण्डुलाः, यजतेयजमानः इत्यत्र यावर्थौ पचियज्योः समधिगतौ विक्लित्तिमात्रसङ्कल्पमात्रलक्षणौ, तावेव प्रज्ञायेते 'पचति देवदत्तः' 'यजन्ति याजकाः' इत्यत्रापि। अतस्तादर्थ्यमेव युक्तमिति॥

ननु तादर्थ्यं भवतु, तावन्मात्र(त्रार्थत्व)न्तु कस्मात्? अधिकार्थत्वेऽपि [9]तादर्थ्याविरोधादित्याशङ्क्याह—अव्यभिचाराद्धि तावन्मात्रमर्थो नाधिकम्, व्यभिचारादिति॥ पचियज्योर्विक्लित्तिसङ्कल्पमात्रमेवार्थः, अव्यभिचारात्। नाधिकमधिश्रयणादिकं कर्तृव्यापाररूपम्; व्यभिचारात्। यो हि शब्दो यमर्थं न व्यभिचरति स तदर्थो ग्राह्यः। यश्च यं व्यभिचरति न स तदर्थो ग्रहणमर्हति॥ इतोऽपि न विक्लित्त्यादिव्यतिरिक्तः कर्तृव्यापारो धातोरर्थः इत्याह—शब्दान्तरनिबन्धनत्वाच्च, प्रत्ययागमे हि प्रतीयमानः तदर्थ एव कर्तृव्यापार इति॥ धातोः शब्दान्तरं प्रत्ययः स एव [10]निबन्धनः कर्तृव्यापार[ः] प्रत्ययस्य यतः, अतोऽपि नासौ धातोरर्थः। शब्दान्तरनिबन्धनत्वं कर्तृव्यापार(प्रत्यय)स्य कुतो ज्ञायत इत्यपेक्षायामुक्तम्—

---

१. तद्व्यापाराभ्युपगमात्—**ख.**
२. तदर्थस्यानर्थान्तर—**क, घ**; तदर्थस्यार्थान्तर—**ख.**
३. अव्यभिचारादेतन्मात्रमेव—**ङ.**
४. तन्मात्रमेव तदर्थो—**ख, ग, घ.**
५. प्रत्ययावगमेऽपि—**क, ख.**
६. -मानतदर्थ—**ङ.**
७. कर्तृत्वविषययोः—**च.**
८. विशेषैकावलम्बनत्वस्य—**छ.**
९. तादर्थ्यविरोधात्—**च.**
१०. निबन्धनं कर्तृव्यापारं—**छ.**

**कर्तृव्यापारः। [१]प्रधानानाञ्च प्रायेण प्रत्ययार्थत्वात्प्राधान्यादपि प्रत्ययार्थत्वम्।**

---

प्रत्ययागमे हीत्यादि। यदा ह्याख्यातप्रत्ययः प्रयुज्यते तदा [२]कर्तृव्यापारः प्रतीयते, नान्यत्(दा)। अतोऽन्वयव्यतिरेकाभ्यां स तदर्थ एव भवितुमर्हतीत्यर्थः। इतोऽपि प्रत्ययार्थः कर्तृव्यापार इत्याह—प्रधानानां च प्रायेण प्रत्ययार्थत्वात्प्राधान्यादपि प्रत्ययार्थत्वमिति॥ अयमर्थः—आख्यातप्रत्ययान्ते पदे कर्तृव्यापारः प्राधान्येन प्रतीयते, न पाचकादिष्विवोपसर्जनतया। प्राधान्याच्च प्रत्ययार्थत्वमवगम्यते, प्रधानानां प्रायेण प्रत्ययार्थत्वदर्शनात्। यथा पाचकशब्दात्कर्तुः[३] प्राधान्यं प्रतीयते, यथा चौपगवशब्दादपत्यस्य। प्रायेणेत्यनेनै[४]तद्दर्शयति—बाहुल्येन प्रत्ययार्थस्य प्राधान्यं दृश्यते, न पुनः सर्वत्र। क्वचित्तु प्रकृत्यर्थस्य प्राधान्यं प्रत्ययार्थस्य गुणभावो दृश्यते—यथा शुक्लतरः शुक्लतम इति॥

नन्वेवन्तर्हि अनैकान्तिकं प्राधान्यं कथं कर्तृव्यापारस्य प्रत्ययार्थत्वनिश्चयहेतुत्वेनोच्यते? नैष दोषः। सम्भावनामात्रहेतुताभिप्रायेणास्योक्तत्वात्। आख्यातप्रत्ययस्यापि भावनां प्रति व्यभिचाराद्धातोरिव तदभिधायकत्वमनुपपन्नमिति शङ्कते—अस्त्यादिषु व्यभिचार इति चेदिति॥ अस्ति भवतीत्यादिषु प्रत्ययस्य भावनां प्रति व्यभिचारः। नहि तत्र भावना सम्भवति, भाव्याभावात्। न च भाव्यानपेक्षिणी भावना सम्भवति। [५]नाप्यस्त्यर्थस्य कर्तैव भाव्य इत्युपपद्यते, कर्तृकर्मणोर्भेदप्रसिद्धेः। अतो व्यभिचारान्न प्रत्ययस्य भावनार्थत्वं सम्भ-

---

१. यथोक्तम्—
'तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः।
प्रत्ययश्रुतिवेलायां भावनात्मा प्रतीयते॥'
—अयं ग्रन्थः 'कर्तृव्यापारः' 'प्रधानानां च प्रायेण' इत्यनयोर्मध्ये दृश्यते—**ग, घ, ङ**; मातृकासु. भट्टोम्बेकटीकायां अस्य ग्रन्थस्यावतारिका एवं दृश्यते—'अत्र वृद्धानुमतिं दर्शयति—यथोक्तमिति।'

२. तदा पूर्वापरः प्रतीयते—**च.**

३. प्राधान्यात्—**छ.**

४. 'एतत्' नास्ति—**छ.**

५. न चास्त्यर्थस्य—**छ.**

**अस्त्यादिषु व्यभिचार इति चेत्—न, [1]वस्तुतोऽ[2]भावेऽपि शब्दात्प्रतीतेः। अन्यथा [3]अस्ति [4]भावः सत्तेत्यभेदात्।**

---

वतीति। एवमाशङ्कां दर्शयित्वा निराकरोति—न, वस्तुतोऽभावेऽपि शब्दात्प्रतीतेः, अन्यथा अस्ति भावः सत्तेत्यभेदादिति॥ नेति प्रदर्शितां प्रत्ययस्य भावनाव्यभिचाराशङ्कां प्रतिषेधति। कथम्? अस्तीत्यादौ यद्यपि वस्तुतो भाव्याभावात् भावना न[5] सम्भवति, तथापि सा शब्दात्प्रतीयते। अतश्शब्दवाच्या सा तत्रापि विद्यत एव। एतदुक्तं भवति—विषयान्तरपरिदृष्टाया भावनाया इहाध्यारोप इति। एवमस्य ग्रन्थस्यार्थः श्रुत्या प्रतिभाति। स चायमनुपपन्न इति कैश्चिद्व्याख्यातृभिः परित्यक्तः, अन्यश्च [6]परिगृहीतः।

का पुनरस्यानुपपत्तिः? उच्यते। अध्यारोपकल्पना हि प्रतीतिवैलक्षण्ये सति सम्भवति। नचेह तदस्ति इति। कः पुनरस्यार्थः? उच्यते। अस्त्यादिष्वप्यस्त्येव भावना। भाव्यन्तु कर्तुर्घटादेः सत्तैव प्रकृत्यर्थभूता।

ननु किं सत्तासामान्यस्य भाव्यत्वम्? किं वा विशेषस्य? न तावत्सामान्यस्य; नित्यत्वात्। विशेषस्य चेत्तर्हि घटस्यैव भाव्यत्वमुक्तं स्यात्। तस्य चास्त्यर्थे कर्तृत्वान्न कर्मत्वं सम्भवति। उच्यते—पूर्वावस्थो घटः कर्ता उत्तरावस्थो घटस्तु कर्मेति न विरोधः इति॥

अत्र वयं पृच्छामः—भवत्वेतत्कादाचित्केषु घटादिषु। [7]नित्येष्वाकाशादिषु कथम्? इति। तत्रापि ह्यस्त्यादि प्रयुज्यते आकाशमस्ति भवतीति। नहि तत्र भाव्यं

---

१. वस्तुतोऽपि—ख.
२. भावेऽपि शब्दात्तथाप्रतीतेः—ख.
३. आस्ते—ङ.
४. भावसन्तत्यसेदात्—क; भावसत्ताद्यभेदात्—ख; भावः सत्तेत्यभेदः प्रसज्येत—ग, घ; त्यभेदादभेदः—ङ.
५. 'न' नास्ति—च.
६. अन्यश्च गृहीतः—छ.
७. नित्येष्वकारादिषु—छ.

किञ्चिन्निरूपयितुं शक्यते। अतस्तत्र भावना नास्तीति कथमाख्यातप्रयोग इति। तत्र समारोपेण प्रयोग इति चेत्—घटो भवतीत्यत्रापि तथा स्यात्। नहि तत्रात्र च प्रतीतिर्भिद्यते। अपि च करोत्यर्थो हि भावना। नचेह करोतिः प्रयुज्यमानो दृश्यते। नहि किं करोतीति पृष्टे अस्ति भवतीति वा प्रतिवचनं दृश्यते। यदि पुनरस्त्यादिः करोतिना एकार्थः स्यात् तदा तत्समानाधिकरणोऽपि कदाचित्प्रयुज्येत पचत्यादिवत्। न च प्रयुज्यते। तस्मान्नास्त्यादिषु भावना। किन्त्वन्यत्र परि[1]दृष्टैवोपचर्यते। नचैतावता सिद्धकर्तृविषयस्याप्याख्यातप्रत्ययस्यौपचारिकत्वम्, तत्र करोत्यर्थस्य प्रतीयमानत्वात्।

एवमस्य ग्रन्थस्य कथञ्चिद्यथाश्रुतेऽप्यर्थे ग्रहणयोग्ये सत्यपि कैश्चिद(यम)न्यथा व्याख्यातः—वस्तुतः तदभा(तोऽभा)वेऽपीति। कर्तृव्यतिरिक्तभाव्याया भावनाया अभावेऽपि शब्दात्प्रतीतेरस्त्यर्थस्य कर्तुर्घटादेरेवावस्थान्तरविशिष्टस्य भाव्यत्वसम्भवाच्छब्दाद्भावनाप्रतीतिरुपपद्यत इत्यर्थः। कथन्तर्ह्यत्र करोतेः प्रयोगाभावः? स्थूलदृष्ट्येह [2]भावनाप्रतीतेरभावात्। अत्र हि कर्तव्या(र्तृव्य)तिरिक्तभाव्याभावेऽपि कर्तुरेव घटादेः केनचिदवस्थाभेदेन भाव्यत्वसम्भावनानिरूपणद्वारेण भावना सूक्ष्मदृष्ट्या दृश्यते। न पुनः सिद्धकर्तृविषय इव स्थूलदृष्ट्या। स्थूलदृष्ट्यनुसारी हि प्रायेण लौकिकः[3] शब्दव्यवहारः। तस्माद्घटोऽस्तीत्ययमर्थः—[4]घटः स्वात्मानं सन्तं करोतीति। कथं [5]तर्ह्यसतो घटस्य कर्तृत्वम्? अत्यन्तासत्त्वानभ्युपगमात्। कथन्तर्हि नित्येष्वाकाशादिष्वस्त्यादेः प्रयोगः? उच्यते। तत्र भावनाया अभावनिश्चयाद्धात्वर्थमात्रविवक्षया प्रयोगः। प्रकृतेश्च केवलप्रयोगानर्हत्वात्प्रत्ययस्य प्रयोगः। अपि च योऽपि भावनाया अपि धातुनैवाभिधानं मन्यते, तस्याप्येष दोषस्समान एव। अस्त्यादौ धातोरपि प्रत्ययस्येव भावनां प्रति व्यभिचारात् (इति) अलमतिवाचालतया॥

---

१. दृष्टैहोप—छ.
२. भावनाप्रतीत्यभावात्—ङ.
३. लौकिकशब्द—ङ.
४. घटस्यात्मनः सन्तं—च.
५. तर्ह्यासते कर्तृत्वं—च.

**[1]सत्ताया एव साध्यरूपेण धातुनोपादानात् साध्यताप्रतीतिः, न पुनः प्रत्ययेन भावनाया अभिधानात्। सत्ता भाव इति च सत्ताया धातुनैव सिद्धरूपेण उपादानात् सिद्धरूपप्रतीतिः, न पुनः प्रत्ययेन भावनाया अनभिधानात्। व्यापारसंस्पर्शकृतस्य साध्यत्वस्य [2]पच्यादौ निश्चयात्। इहैव तर्हि व्यभिचारः 'यजते यजमानः',**

---

प्रस्तुतं व्याख्यायते—अस्त्यादावपि शब्दाद्भावना प्रतीयते इत्युक्तम्। तत्र हेत्वपेक्षायामाह—अन्यथा अस्ति भावस्सत्तेत्यभेदादिति ॥ यद्यस्तीत्यादौ शब्दाद्भावना नावगम्येत, तदा अस्ति भावस्सत्तेत्यत्र सर्वत्र बुद्धिभेदाभावप्रसङ्गः। यथा भावशब्देन च सिद्धरूपो धात्वर्थः प्रतीयते एवमस्तीत्यनेनापि प्रतीयेत। नच तथा प्रतीयते, किन्तु साध्यस्वरूपतया। तच्चास्तीत्यत्र धात्वर्थातिरिक्तव्यापाराभिधानाभावे विरुध्यते।

तत्र शङ्कते—सत्ताया एव साध्यरूपेण धातुनोपादानात्साध्यताप्रतीतिः, न पुनः प्रत्ययेन भावनाया अभिधानात्। सत्ता भाव इति च सत्ताया धातुनैव सिद्धरूपेणोपादानात् सिद्धरूपप्रतीतिः, न पुनः प्रत्ययेन भावनाया अनभिधानात् इति। [3]अस्योत्तरमाह—व्यापारसंस्पर्शकृतस्य साध्यत्वस्य पच्यादौ निश्चयादिति ॥ अयमर्थः—पच्यादौ व्यापारान्तर[4]सम्पर्ककृतं धात्वर्थस्य साध्यत्वमवधारितम्—कः पाकः पचतीत्यादौ। एवञ्च सति अस्त्यादावपि धात्वर्थसाध्यत्वं व्यापारान्तरसंस्पर्शकृतमेवेति निश्चीयते। पुनरपि प्रत्ययस्य भावनाव्यभिचारं विषयान्तरे चोदयति—इहैव तर्हि व्यभिचारः 'यजते यजमानः' 'पच्यन्ते स्वयमेव तण्डुलाः' इति ॥ अयमर्थः—यदि कर्मकर्तृविषयस्य पचतेर्धातोः यजमानकर्तृविष-

---

१. सत्ताया एव व्यापारात्मना प्रतीतेः भेद इति चेत्—न, व्यवहारान्तरसंस्पर्शकृतस्य—क, ख, ग, घ, ङ.

२. पचत्यादिषु—ख; पचादौ—ङ.

३. इतः पूर्वं 'सत्ता भाव इति च सत्ताया धातुनैव सिद्धरूपेणोपादानात्' इत्यधिकं वर्तते—च मातृकायाम्।

४. संस्पर्शकृतं—छ.

**'[१]पच्यन्ते स्वयमेव तण्डुलाः' इति । [२]व्यापारान्तरोपगमे वा धातोरव्यभिचारः । न, अभ्युपगमात्[३] लेनाभिधानस्य, तन्निबन्धनत्वात्त-**

---

यस्य च यजेः भावनां प्रति व्यभिचार उच्यते त्वया, तर्हि इहापि(हैव) मयैव(यापि) प्रत्ययस्य भावनां प्रति व्यभिचार उच्यते इति । अथेह प्रत्ययव्यभिचारदोषपरिजिहीर्षया विक्लित्तिव्यतिरिक्तस्तण्डुलसमवायी, द्रव्यत्यागसङ्कल्पातिरिक्तश्च यजमानसमवायी कर्तृव्यापारोऽभ्युपगम्येत, तदा धातोर्व्यभिचाराभावात्कर्तृव्यापारस्य तदभिधेयत्वानभ्युपगमो निर्निबन्धनस्स्यादित्येतदाह—व्यापारान्तरोपगमे वा धातोरव्यभिचार इति । अस्योत्तरमाह—न, अभ्युपगमाल्लेनाभिधानस्य [४]तन्निबन्धनत्वात्तस्यान्यथा(पि) सिद्धेः पाकादिषु व्यभिचारात् इति ॥ यदुक्तम्—[५]व्यापारान्तराभ्युपगमे धातोर्व्यभिचाराभावात् तस्य तदभिधेयत्वं प्राप्नोतीति, तन्निषेधाय नेत्युक्तम् । तत्र हेतूक्तिः—अभ्युपगमाल्लेन [लकारेणाभ्युपगमात्] अभिधानस्येति । विक्लित्त्यादिव्यतिरिक्तस्य व्यापारस्य लेन लकारेणाभिधानमभ्युपगम्यते, न धातुना । [६]अतो व्यापाराभ्युपगमेऽपि न तस्य धात्वभिधेयत्वं प्रसज्यते । कथं पुनः कर्तृव्यापारस्य लकारेणैवाभिधानमभ्युपगम्यते? न धातुना? अन्वयव्यतिरेकाविशेषेऽपीत्याशङ्कयोक्तम्—तन्निबन्धनत्वात् तस्यान्यथापि सिद्धेरिति ॥ तन्निबन्धनत्वात्—लकारनिबन्धनत्वात्; तस्य—कर्तृव्यापारस्य; अन्यथापि—धातोः तदभिधानसामर्थ्यकल्पनेन[७] विनापि; सिद्धेः—उपपत्तेरित्यर्थः ॥

ननु विपर्ययेणापि [८]अन्यथासिद्धौ सम्भवन्त्यां कोऽत्र विनिगमनायां हेतुः? कर्तृव्यापारप्रत्ययस्य धात्वन्वयव्यतिरेकयोरन्यथासिद्धिः, न पुनः प्रत्यया-

---

१. पच्यते स्वयमेवेति—**क, ख.**
२. व्यापारोपगमे—**ङ.**
३. तिङा—**ग, घ**; अभ्युपगमात् न व्यभिचारः—**ङ.**
४. निर्निबन्धनत्वात्—**च.**
५. 'व्यापारान्तराभ्युपगमे' इत्यारभ्य 'अभ्युपगमात्' इत्यन्तो ग्रन्थः नास्ति—**छ** मातृकायाम् ।
६. 'अतः' इत्यारभ्य 'अभ्युपगम्यते' इत्यन्तो ग्रन्थः नास्ति—**छ** मातृकायाम् ।
७. संकल्पनेन—**छ.**
८. अन्यथासिद्धाः संभवन्ति, एकोऽत्र—**छ.**

**स्या[1]न्यथा(पि)सिद्धेः पाकादिषु व्यभिचारात्, [2]भेदेनानिदर्शनाद-प्रतीतेः,[3] [4]इतरत्र तैर्निष्कर्षणात्, [5]अतुल्यार्थत्वात्तन्निष्कर्षः, सा-**

---

न्वयव्यतिरेकयोरि(ती)त्याशङ्क्योक्तम्—पाकादिषु व्यभिचारादिति ॥ 'पाकः', 'यागः' इत्यादिषु धातोः कर्तृव्यापाराभिधानं प्रति व्यभिचारात् आख्यातपदेऽपि घञाद्यन्तप्रयोग-प्रसिद्धविक्लित्त्यादिमात्राभिधानेन चरितार्थत्वान्न कर्तृव्यापारवाचित्वं ग्रहीतुं शक्यत इत्यर्थः । कथं पुनः पाकादिषु धातोः विक्लित्त्यादिव्यतिरिक्तकरोत्यर्थाभिधानं प्रति व्यभिचार इत्या-शङ्क्याह—भेदेनानिदर्शनादप्रतीतिरिति ॥ पाकादिषु विक्लित्त्यादि[षु]व्यतिरिक्तस्य कर्तृ-व्यापारस्य भेदेन निदर्शनाभावात् अप्रतीतिरर्थभेदस्य । एतदुक्तं भवति—अर्थभेदप्रतीति-निमित्तकस्य भेदनिदर्शनस्य 'पाकः क्रिया' इत्येवंरूपस्य नियमेनादर्शनादर्थभेदप्रतीत्य-भावोऽवगम्यते । ततश्चार्थभेदाभावोऽवगम्यते । अतः पाकादिषु धातोः करोत्यर्थाभिधानं प्रति व्यभिचार इति ॥

नन्वर्थस्य भेदेनानिदर्शनाद्धातोरर्थभेदो मा भूत् । किन्त्वेक एवार्थोऽस्तु धातोः । स च विक्लित्त्यादिविलक्षणः कर्तृव्यापार एव कस्मान्नेष्यते इत्याशङ्क्याह—इतरत्र तैर्निष्कर्षणात् अतुल्यार्थत्वात्तन्निष्कर्ष इति ॥ अयमर्थः—इतरत्र तिङन्ते पदे तैः पाकादिभिर्धात्वर्थैः प्रत्ययाभिधेयस्य कर्तृव्यापारस्य निष्कर्षणं पृथक्करणं दृश्यते 'पाकं करोति' इति । अत्र हि पाकमिति द्वितीयान्तेन पदेन धात्वर्थः कर्मतया निर्दिश्यते । करोतीत्यनेन च प्रत्ययार्थः क्रियात्वेन । स चायं निष्कर्षः धात्वर्थात्कर्तृव्यापारस्य प्रत्ययाभिधेयतया अतुल्यार्थत्वादेव धातुप्रत्यययोरुपपद्यते । एतदुक्तं [6]भवति—(यदि) व्यापारादाख्यातार्थादर्थान्तरे विक्लित्त्यादि-

---

१. तस्यासिद्धे—ङ.

२. भेदेनानिर्देशात्—क; भेदानां निर्देशात्—ख.

३. अतः प्रतीतेः—ङ.

४. इतरत्र भेदेन निष्कर्षणात्—क, ख; इतरत्राख्याते भेदेन निष्कर्षणात्—ग,घ,ङ.

५. अन्यथा तुल्यत्वादनिष्कर्षणं स्यात्—क, ख, ग, घ, ङ.

६. भवति—यत्कर्तृव्यापारात्—छ.

**मान्यविशेषयोः[१] साध्यसाधनभावायोगात्[२], सामान्यस्यासाध्यत्वात्, [३]अनभिधेयाख्यानापत्तेः ।**

---

लक्षणे धातुर्न वर्तेत, तदा तदर्थ(र्थात्)भेदेन कर्तृव्यापारस्य[४] करोत्यर्थस्य निदर्शनं नोपपद्येत । तस्मान्न कर्तृव्यापारो धात्वभिधेय इति ॥

ननु पाकादिर्धात्वर्थविशेषः, तत्सामान्यं करोत्यर्थः, इति सामान्यविशेषभावनिबन्धनाद्भेदान्निष्कर्ष उपपद्यत इत्याशङ्क्याह—सामान्यविशेषयोः साध्यसाधनभावायोगादिति ॥ सामान्यविशेषयोः साध्यसाधनभावो नोपपद्यते, अन्यत्रादर्शनात् । तत्रैव दूषणान्तरमाह—सामान्यस्यासाध्यत्वादिति ॥ अयमर्थः—साध्यस्वभावो हि करोत्यर्थो गम्यते, न सिद्धस्वभावः। साधनरूपो हि सः । न च तथारूपत्वं सिद्धत्वेऽवकल्पते, घटादेः तदभावात्, तच्च[1] साध्यस्वभावत्वं तस्य सामान्यमात्रत्वे नोपपद्यते। गुणविशेषत्वाद्धि सिद्धरूपो धात्वर्थ उपेयते। कथं तत्समवायि सामान्यं साध्यस्वभावं स्यात्? अतः क्रियाकारकयोरर्थयोः पचतीत्यत्र निदर्श्यमानत्वान्न धात्वर्थविशेषसामान्ययोरयं निष्कर्षः—'पाकं करोति' इति (इति)॥ पुनरपि तत्रैव दूषणान्तरमाह—अनभिधेयाख्यानापत्तेरिति ॥ अयमर्थः—यदि धात्वर्थसामान्यविशेषयोः एष निष्कर्षः स्यात्, तदानभिधेयस्याख्यानमापद्यते। कथम्? पचतीत्यस्मिन्पदे केनांशेन धात्वर्थसामान्यमभिधीयत इति वाच्यम्। न तावत्प्रकृत्यंशेन पचिना, तस्य विशेषाभिधानात् । नापि प्रत्ययांशेन, तस्य धात्वर्थसामान्यवाचित्वानभ्युपगमात् । अस्मत्पक्षे तु पाकभावनयोः प्रकृतिप्रत्ययाभिधेयत्वात् तयोरेव च पाकं करोतीति निदर्श्यमानत्वान्नानभिधेयाख्यानापत्तिः । तस्माद्धात्वर्थातिरिक्ता भावना प्रत्ययाभिधेया अस्तीति निश्चीयते ॥

---

१. विशेषयोश्च—**ग, घ, ङ.** ख्यानापत्तेश्च—**ख**; ...ख्यानानुपपत्तेश्च-**ग, घ**; अनभिधानाख्यानानुपपत्तेश्च—**ङ.**

२. साध्यस्य साधनत्वायोगात्—**ङ.**

३. अनभिधेयाख्यानापाताच्च—**क**; ... ...

४. व्यापारभेदस्य—**च.**

भवतु धात्वर्थव्यतिरिक्ता भावना प्रत्ययाभिधेया। धात्वर्थस्तु पचत्यादौ विक्लित्त्यादि-लक्षण एवेत्येतन्न मृष्यते। स त्वधिश्रयणादिलक्षणः कर्तृव्यापार एव। यस्त्वन्योऽधिश्रयणादेः परिस्पन्दरूपाद्व्यापारादान्तरः प्रयत्नाख्यः कर्तृव्यापारः स प्रत्ययार्थो भवतु। एवमप्युपपद्यते धातुप्रत्यययोः अर्थभेदनिदर्शनम्। क्रियावचनत्वं च धातूनामभियुक्तैरभ्युपगतमेवं सत्युपपन्नं स्यात्। उक्तं हि—'क्रिया धात्वर्थमात्रं स्यात्' इत्यादि, 'क्रियावाचिनो धातवः' इति च। विक्लित्त्यादिलक्षणगुणविशेषधात्वर्थपक्षे तु तदनुपपन्नं स्यात्। उच्यते—उक्तोत्तर-मेतत्। उक्तं हि—कर्मकर्तृविषये(य)पचेरधिश्रयणादिलक्षणकर्तृव्यापाराभिधानं प्रति व्यभिचार इति॥

ननु तत्र व्यभिचारः प्रत्ययस्याप्यविशिष्टः, व्यापाराभ्युपगमे धातोरव्यभिचार इत्य-प्युक्तम्। सत्यमुक्तम्; अस्योत्तरमप्युक्तम्—पाकादिषु धातोः कर्तृव्यापाराभिधानं प्रति व्यभिचारात् लकारेणैव तस्याभिधानमिति॥

ननु घञन्ते पाकादौ अर्थभेदनिदर्शनाभावाद्व्यभिचारः तिङन्ते च तद्भावादव्यभि-चारात् प्रत्ययस्ये(स्यै)व करोत्यर्थात्मिका भावनेत्युक्तम्। सा च करोत्यर्थात्मिका भावना प्रयत्न एव, नाधिश्रयणादिग्रा(र्वा)ह्यो [१]व्यापार इति इदानीं वदामः। तत्र कथमुक्तोत्तरत्व-मिति। उच्यते—[२]यदा प्रयत्न एव भावना प्रत्ययार्थः, तदैतदेवं स्यात्; यदा पुनः कर्तृव्या-पारमात्रं सिद्धकर्तृव्यापारमात्रं वा चेतनाचेतनसाधारणं भावना प्रत्ययार्थः स्यात्, तदैतन्नोप-पद्यते। नचात्मकर्तृकः प्रयत्न एव भावनेत्येतदप्यवोचाम—'आत्मकर्तृकमेव' इत्यादौ। ननु प्रयत्नपरिस्पन्दयोरुभयोरपि भावनात्वाभ्युपगमेऽपि चेतने प्रयुज्यमानस्याख्यातस्य प्रयत्न एवार्थः, अचेतने प्रयुज्यमानस्य परिस्पन्दः। ततश्च पचतीत्यत्र देवदत्तस्य(स्थ)प्रयत्नाख्य-

१. व्यापार इदानीमिति वदामः—च.

२. 'यदा' इत्यारभ्य 'स्यात्' इत्यन्तो ग्रन्थः नास्ति—च मातृकायाम्।

व्यापारवचनत्वात्प्रत्ययस्य अधिश्रयणादिः धात्वर्थ एव कस्मान्नेष्यते ?। उच्यते—अचेतने प्रयुज्यमानयोः धातुप्रत्यययोः यावर्थौ समधिगतौ—कर्तृव्यापारः, तत्फलभूतो गुणविशेषश्च संयोगविभागलक्षणः, तावेव तयोश्चेतनविषययोरप्यर्थौ ग्राह्यौ, विरोधाभावात्। अतः पचत्यादौ न प्रयत्न एव केवलः प्रत्ययार्थः, नापि परिस्पन्द एव केवलः, किन्तु कर्तृव्यापारमात्रम्। जानातीत्यादौ तु आत्मकर्तृक एव व्यापारः। अग्निर्ज्वलतीत्यादौ तु परिस्पन्द एव। धात्वर्थस्तु सर्वत्र व्यापारफलभूतो गुणविशेष एवेति मतमाचार्यस्य इति। स्पष्टीकरिष्यति चैतदुपरिष्टात्स्वयमेव ।

यच्चोक्तमभियुक्तैः क्रियावचनत्वं धातोरङ्गीकृतमिति, तत्रोच्यते—परपरिकल्पित(प्र)-क्रियानुसारेणापि कदाचिदन्यपरत्वादनभिप्रेतार्था अपि गिरः प्रवर्तमाना दृश्यन्ते विचक्षणा-नामित्यविरोध इति ॥

अथवा स्वतो गुणविशेषस्यापि धात्वर्थस्य प्रत्ययाभिधेयक्रियोपरक्तत्वेन क्रियात्वमस्तीति क्रियात्वोक्तिः सङ्गच्छते। यथा वक्ष्यत्याचार्यः 'परोपाधि' इत्यादि। नचैवं मन्तव्यं देवदत्तादौ कर्तरि समवेतो यो[1] व्यापारः, स पचतीत्यत्र प्रत्ययार्थः ; यत्तु(स्तु) काष्ठादिकार-कान्तरसमवेतो ज्वलनादिव्यापारः, स धातोरर्थ इति। नानाजातीनां ज्वलनादिव्यापाराणा-मेकेन पचिधातुना अभिधानानुपपत्तेः। विक्लित्त्याद्येकफलावच्छेदेन तेषामेकत्वसम्भवात् एकेन धातुना अभिधानमुपपद्यत इति चेत्—एवं तर्हि विक्लित्त्यादेः फलस्यैव पचिवाच्यत्व-मिष्यताम्, लाघवात्। कथन्तर्हि पचतीत्यत्र ज्वलनादीनां प्रतीतिः ? प्रत्ययाभिधेयकर्तृ-व्यापारान्तर्भावात्। कर्तृव्यापारे हि फलपर्यन्ते पूर्वापरीभूतात्मनि कारकान्तरव्यापाराः अन्तर्भावं प्रतिपद्यमानाः प्रत्ययनिबन्धनप्रत्ययतां नातिवर्तन्ते इति। अतः सुष्ठूक्तं—'विक्लित्तिमात्रं सङ्कल्पविशेषमात्रं चाचक्षाते पचियजी' इति ॥

१. 'यो' नास्ति—छ मातृकायाम्.

[1]किञ्च—

**तदेव तस्य करणं [2]न वै कर्म च कल्पते।**
**भावनां सङ्गिरन्तेऽतो धात्वर्थव्यतिरेकिणीम्॥ ३९॥**

'यजेताश्वमेधेन', '[3]ईजे बहुभिर्यज्ञैः', 'स्वं यज्ञं [4]यजति' इत्येकत्वे क्रियाकारकभावानुपपत्तिः[5]। सामान्यविशेषभेदोऽपि न

---

इतोऽपि धात्वर्थातिरिक्ता भावना अभ्युपगन्तव्या इत्याह—किञ्च—

तदेव तस्य करणं न वै कर्म च कल्पते।
भावनां सङ्गिरन्तेऽतो धात्वर्थव्यतिरेकिणीम्॥ (इति)॥

अयमर्थः---एकस्यैव क्रियात्वं कारकत्वं च नोपपद्यते, क्रियाकारकयोर्भेदप्रसिद्धेः[6]। दृश्यते च क्रियाकारकभावो धात्वर्थप्रत्ययार्थयोः 'यजेताश्वमेधेन' इत्यादौ। अतो धात्वर्थात्कारकाद्व्यतिरिक्तां प्रत्ययाभिधेयां क्रियां प्रतिजानते। 'प्राज्ञाः' इति शेषः। अस्यार्थस्य स्पष्टीकरणायाह—'यजेताश्वमेधेन' 'ईजे[7] बहुभिर्यज्ञैः' 'स्वं यज्ञं यजति' इत्येकत्वे क्रियाकारकभावानुपपत्तिरिति॥ 'यजेताश्वमेधेन' इत्यत्र तावदश्वमेधनामधेयस्य धात्वर्थस्य करणत्वं प्रतीयते, 'अश्वमेधेन' इति तृतीयाश्रवणात्। ततस्तत्र तद्व्यतिरिक्ता क्रिया अभ्युपेया, यत्रास्य करणत्वम्। 'ईजे च बहुभिर्यज्ञैः' इत्यत्रापि 'ईजे' इत्याख्यातार्थं प्रति यज्ञानां करणत्वं गम्यते। तत्र यदि 'ईजे' इति पदे यज्ञव्यतिरिक्ता क्रिया प्रत्ययाभिधेया नाभ्युपगम्येत, यज्ञानां करणत्वं श्रूयमाणं बाध्येत। [8]तथा 'स्वं यज्ञं यजति' इति यज्ञ-

---

१. 'किञ्च-तदेव' इत्यारभ्य 'व्यतिरेकिणीम्' इत्यन्तो ग्रन्थः नास्ति—**घ** मातृकायाम्।
२. नचैकमव—**ग, घ, ङ.**
३. इष्टवान् बहुभिः—**ग, घ, ङ.**
४. यजतीत्येकस्यैव—**क, ख**; यजतीति चैकत्वे—**ग, घ, ङ.**
५. भावानुपपत्तेः—**क.**
६. भेदः प्रसिद्धः—**छ.**
७. ईजे च—**छ.**
८. तदा—**च.**

**क्रियाकारकसम्बन्धमुपपादयितुं[१] क्षमः, सामान्यस्यासाध्यत्वेनाक्रियात्वात्[२], विशेषणविशेष्यसम्बन्धे तु कारकविभक्तिविरोधः[३]। नाप्येकदेशयोः क्रियाकारकभावः, उभयत्रापि[४] समुदायस्य शब्दो-**

---

मिति द्वितीयानिर्देशाद्यज्ञस्य कर्मत्वं कारकत्वं (कर्मकारकत्वं) गम्यते यजत्यर्थं प्रति । अतो यजतीत्यस्मिन्पदे प्रकृत्यर्थात्कर्मभूताद्यागाद्भिन्ना क्रिया प्रत्ययाभिधेया इत्यभिप्रायः ।

नच सामान्य(विशेष)भावनिबन्धनेन भेदेन क्रियाकारकभावः उपपादयितुं शक्यत इत्याह—सामान्यविशेषभेदोऽपि न क्रियाकारकसम्बन्धमुपपादयितुं क्षमं(मः), [५]सामान्यस्यासाध्यत्वेन (अ)क्रियात्वादिति ॥ योऽपि मन्यते धात्वर्थसामान्यं प्रत्ययार्थः । तद्विशेषः प्रकृत्यर्थः । अतस्तयोः कियानपि भेदो विद्यत इति, तस्यापि नैवंविधो भेदः क्रियाकारकसम्बन्धमुपपादयितुं क्षमः, सामान्यस्य क्रियात्वाभावात् , तदभावश्च तस्य साध्यत्वाभावात् , साध्यत्वाभावश्च सामान्यस्य व्यक्तीनां साध्यत्वाभावात् । व्यक्तीनां साध्यत्वेन क्रियात्वाभ्युपगमे कारकत्वानुपपत्तिप्रसङ्गात् । अतो न सामान्यविशेषभेदेनायं क्रियाकारकभावस्सम्भवति ॥

ननु मा भूत्क्रियाकारकसम्बन्धः सामान्यविशेषयोः, विशेषणविशेष्यसम्बन्धस्तु सम्भवति इत्याशङ्कयाह—विशेषणविशेष्यसम्बन्धे तु कारकविभक्तिविरोध इति ॥ अश्वमेधेन, बहुभिर्यज्ञैः, स्वं यज्ञमिति करणकारकविभक्तेः कर्मकारकविभक्तेश्च विशेषणविशेष्यसम्बन्धाभ्युपगमे विरोधः स्यात् । अथ मतं—क्रियासमुदायो यागः, तस्य [६]कश्चिदेकदेशः कारकमश्वमेधादिशब्दैरभिधीयते । अतः क्रियाकारको(कभावो)पपत्तिरिति । एतदप्ययुक्तमित्याह—नाप्येकदेशयोः क्रियाकारकभावः, उभयत्रापि समुदायस्य शब्दोपादानत्वादिति ॥

---

१. उपकल्पयितुं—ख, ग, घ, ङ.
२. अक्रियात्मकत्वात्—ग, घ, ङ.
३. विभक्तेर्विरोधात्—ग, घ, ङ.
४. 'अपि' नास्ति—ग, घ, ङ मातृकासु.
५. 'सामान्यस्यासाध्यत्वेन' इत्यारभ्य 'क्षमः' इत्यन्तो ग्रन्थः नास्ति—छ मातृकायाम् ।
६. कश्चिद्देशः—छ.

**पादानत्वात्[1]। नापि [2]धातूपादानायामप्यन्तर्भूतसामान्यकर्मकरणिकायां[3] विशेषकर्मकरणसम्बन्धः—यथा 'मुण्डयति माणवकम्', 'मालिन्योपश्लोकयति[4]' इति; 'स्वं यज्ञम्', 'बहुभिर्यज्ञैः[5]' इत्यपि**

---

उभयत्र धातावुपपदे[6] च समुदायस्यैव शब्दाभिधेयत्वात्, अन्यथा धात्वर्थोपपदयोः नामनामिभावासम्भवात्, एकदेशयोः क्रियाकारकभावः अनुपपन्न इत्यर्थः।

यदपि मतं 'यजेताश्वमेधेन' इत्यत्र यजिनैव यागसामान्यकरणिका भावना अभिधीयते। करणविशेषस्त्वश्वमेधशब्देन समर्प्यते–यथा 'मालिन्योपश्लोकयति' इति। अत्रोपश्लोकयतिना णिजन्तेन श्लोकसामान्यकरणिकोपस्तुतिरभिधीयते। तत्र ह्युपश्लोकयतीति—श्लोकैरुपस्तौतीत्यर्थः प्रतीयते। तत्र मालिनीशब्देन [7]श्लोकविशेषवाचिना करणविशेषस्समर्प्यते। [8]तद्वत् 'स्वं यज्ञं यजति' इत्यत्रापि यजिरन्तर्भूतयागसामान्यकर्मिकां भावनां उपादत्ते। यज्ञमित्यनेन च कर्मविशेषः समर्प्यते। यथा 'मुण्डयति माणवकम्' इत्यत्र मुण्डयतिना णिजन्तेन मुण्डसामान्यकर्मिका भावना प्रतीयते—मुण्डं करोतीति, माणवकशब्देन च मुण्डविशेषः प्रत्याय्यते। एवमत्रापि। अतो न प्रत्ययाभिधेया भावनेति। एतन्निराकरोति—नापि धातूपादानायामप्यन्तर्भूतसामान्यकर्मकरणिकायां विशेषकर्मकरणसम्बन्धः—यथा 'मुण्डयति माणवकम्', 'मालिन्योपश्लोकयति' इति॥ अत्रान्तर्भावो [9]गुणभावोऽभिप्रेतः सामान्यस्य कर्मकरणरूपस्य भावनां प्रति। निराकार्यं वस्तूपदर्श्य निराकरणप्रतिज्ञा कृता। इदानीन्तत्र हेतुमाह—स्वं यज्ञम्, बहुभिर्यज्ञैरित्यपि धातुना भावनोपादानात् विशेषभावनाभ्यु-

---

१. समुदायस्याधिकत्वेनोपादानात् — ख; समुदायस्य शब्दोपात्तत्वात्—ग, घ.
२. धातूपात्तायां भावनायामन्तर्भूत—ग, घ.
३. करणिकायां यथा-मुण्डयति माणवकम्-ख.
४. उपश्लोकयति मालिन्येति—ख, ग, घ, ङ.
५. यज्ञैर्यजन्तीत्यपि—क, ख; यज्ञैरित्यत्रापि—ग, घ.
६. उपदेशे—च.
७. श्लोकसामान्य—छ.
८. यद्वत्—छ.
९. गुणाभावः—छ.

**धातुना भावनोपादानात् [१]विशेषभावनाभ्युपगमात् विशेषणविशेष्यसम्बन्धप्रसङ्गात्। अनुपादाने [२]च सिद्धव्यभिचारोऽसौ न [३]तिङन्तेऽपि तामुपादातुमर्हति। एतेन '[४]ओदनपाकं पचति' इत्या-**

---

पगमाद्विशेषणविशेष्यसम्बन्धप्रसङ्गादिति ॥ अयमर्थः—'स्वं यज्ञम्', 'बहुभिर्यज्ञैः' इत्यत्र यज्ञशब्दान्तर्गतेनापि यजिना धातुना यागसामान्यान्विताया भावनाया भवत्पक्ष उपादानात् 'स्वम्' 'बहुभिः' इत्यादिभिरभिसम्बन्धेन तस्या एव भावनाविशेषरूपाभ्युपगमात् 'यजति' 'ईजे' इत्याख्यातपदप्रकृत्युपात्ताया 'यज्ञैः यज्ञ'मिति यज्ञशब्दोपात्तायाश्च भावनाया विशेष्यविशेषणभावप्रसङ्गः। आख्यातप्रकृत्युपात्ताया यागसामान्यान्विततया[५] सामान्यरूपत्वात् यज्ञशब्दोपात्तायाश्च 'स्वं बहुभिः' इत्यादिपदान्तरैः यागविशेषलाभात् विशेषरूपत्वात् सामान्यविशेषयोश्च [६]विशेष्यविशेषणभावस्य सम्भवात् असम्भवाच्च क्रियाकारकभावस्य क्रियाकारकसम्बन्धप्रतीतिरुपरुध्येतेत्यभिप्रायः ॥

अथैतद्दोषपरिजिहीर्षया यज्ञशब्दे धातुः भावनां नोपाददीत, तर्हि तत्र प्रसिद्धभावनाभिधानव्यभिचारः 'यजति' 'ईजे' इति तिङन्तेऽपि तां [७]नोपादातुमर्हति इत्येतदाह—अनुपादाने च सिद्धव्यभिचारोऽसौ न तिङन्तेऽपि तामुपादातुमर्हतीति ॥ वैदिकोदाहरणप्रदर्शितं न्यायं लौकिकोदाहरणेऽतिदिशति—एतेन 'ओदनपाकं पचति' इत्यादयो व्याख्याता इति ॥ योऽयं 'स्वं यज्ञं यजति' इत्यादावुक्तो न्यायः प्रकृत्यर्थातिरिक्तप्रत्ययाभिधेयभूतभावनावगमे, एतेनोपा(नौद)नपाकादयो व्याख्याता वेदितव्याः। तत्रापि हि पचतिशब्दार्थस्य पाकशब्दार्थस्य चैकत्वे क्रियाकारकभावानुपपत्तिः। सामान्यविशेषभेदाभ्युप

---

१. विशेषभावनाभ्युपगमात्—नास्ति—क, ख मातृकयोः।
२. वा—ख, ग, घ, ङ.
३. तिङन्तेष्वपि—क.
४. ओदनः पाकं—क.
५. सामान्यान्वितायाः—छ.
६. विशेषणविशेष्य—छ.
७. नोपपादयितुं—च.

**दयो[1] [2]व्याख्याताः । [3]तस्माद्यत्रैष कारकभावो [4]नामपदोपादान-धात्वर्थस्य [5]विभक्तिभिर्व्यज्यते, स तदतिरेकी तिङन्तेषु प्रत्ययो-**

---

गमेऽपि क्रियाकारकसम्बन्धानुपपत्तिः । विशेषणविशेष्यसम्बन्धे तु कारकविभक्तिविरोधः । नापि क्रियासमुदायात्मकस्य पच्यर्थस्यैकदेशः क्रिया एकदेशान्तरं कारकमिति सम्भवति, तिङन्ते घञन्ते चोभयत्रापि समुदायस्यैव धातूपादानत्वात् । नाप्यन्तर्भूतपाकसामान्यान्विताया भावनायास्तिङन्तपदे धातूपात्ताया ओदनपाकमित्यनेन पाकविशेषा(षेणा)न्वयोऽवगम्यते इति वाच्यम् । पाकशब्देऽपि धातुना पाकसामान्यान्विताया भावनाया अभिधानात्, तस्याश्चौ-दनादिपदान्तरसन्निधानादिलब्धविशेषायाः पचतीत्यत्र धात्वभिहितपाकसामान्यान्वितभावनया सह विशेषणविशेष्यसम्बन्धप्रसङ्गात्क्रियाकारकभावानुपपत्तिः(तेः) । एतद्दोषपरिहाराय पाक-शब्दे धातुना भावनाया अनुपादाने सिद्धव्यभिचारोऽसौ धातुः तिङन्तेऽपि न भावनामभि-धातुमर्हतीति ॥ एवं श्लोकपूर्वार्धं व्याख्यायाधुनोत्तरार्धं पूर्वार्धोपपादितहेतुप्रतिपाद्यार्थनिगमन-रूपं व्याचष्टे—तस्माद्यत्रैष कारकभावो [6]नामपदोपादानधात्वर्थस्य विभक्तिभिर्व्यज्यते, स तदतिरेकी तिङन्तेषु प्रत्ययोपादानः करोत्यर्थः प्रतिज्ञायते वृद्धैरिति ॥ यस्मादेकत्वे क्रिया-कारकभावानुपपत्तिः तस्माद्यत्राश्वमेधादिनामपदोपात्तस्य धात्वर्थस्य तृतीयादिविभक्तिभिः कारक भावो व्यज्यते, स तस्माद्धात्वर्थभावादतिरिक्तः करोत्यर्थः प्रत्ययाभिधेयः प्रतिज्ञायते वृद्धैर्मी-मांसकैः ॥

कथन्तर्हि 'इष्टवान्यज्ञैः' इत्यादौ यज्ञादीनां करणादिभावः? नहि तत्र भावना-वचनत्वाभिमत आख्यातप्रत्ययोऽस्ति; इष्टवानित्यादेः कृदन्तत्वात्, तस्य च कर्तृकारकवच-नत्वात्, कर्तृकारकेण च करणादिकारकान्तराणामन्तरेण क्रियान्वयमन्वयायोगात् । अतः

---

१. पचतीत्यादयोऽपि—**ग, घ, ङ.**
२. व्याख्यातम्—**क.**
३. यस्मात्—**ङ.**
४. नामपदोपादानस्य धात्वर्थस्य—**क, ख**; नामपदोपदोपात्तधात्वर्थस्य—**ग, घ**; नाम-पदोपात्तस्य धात्वर्थस्य—**ङ.**
५. विभक्तिभिरभि—**क, ख.**
६. पदोपादोत्तरस्य—**च.**

**पादानः करोत्यर्थः प्रतिज्ञायते वृद्धैः । 'इष्टवान्यज्ञैः' इत्यपि[1] द्रव्य-[2]प्रधान[3]भावनाधिगमान्निष्ठादिषु [4]तथा प्रतीतेरविरोधः ॥**

**यत्तूक्तं भावनाविषयत्वप्रतीतेः करणत्वहानिः[5], तदनिरूपितकरण(त)त्त्वस्य[6]।**

---

क्रियारूपभावनाप्रतिपादकशब्दाभावात् 'इष्टवान्यज्ञैः' इत्यन्वयानुपपत्तिप्रसङ्गात् (ङ्गः) इत्याशङ्क्याह—'इष्टवान्यज्ञैः' इत्यपि द्रव्यप्रधानभावनाधिगमान्निष्ठादिषु तथा प्रतीतेरविरोध इति ॥ अयमर्थः—यद्यपि तत्राख्याताभावाद्भावनाया अभिधानं नास्ति, तथापि द्रव्यप्रधानादप्युपसर्जनीभूता भावना अवगम्यते। कृदन्ताभिहितस्य कर्तृत्वस्य भावनासम्बन्धप्रभावितत्वात् तद(म)न्तरेणानुपपत्तेः। अतो नान्तरीयकतया द्रव्यप्रधानभावनाभ्युपगमात् यज्ञादीनां करणादिभावप्रतीतेर्न कश्चिद्विरोध इति ॥

एवं धात्वर्थातिरिक्तां भावनामाख्यातप्रत्ययाभिधेयां प्रतिपाद्येदानीं पूर्वपक्षवाद्यापादितमनिष्टप्रसङ्गं निराकरणायानुभाषते—यत्तूक्तं—भावनाविषयत्वप्रतीतेः[7] करणत्वहानिरिति ॥ अयमर्थः—तिङन्ते धात्वर्थस्य साध्यताप्रतीत्या 'कः पाकः पचति' इत्यत्र प्रदर्शितया अर्थभेदनिदर्शनेन च 'पाकं करोति पचति' इत्यत्रोक्तेन यः तिङभिधेयां भावनामिच्छति तस्य पक्षे धात्वर्थस्य भावनायां कर्मत्वप्रसङ्गात् करणत्वमिष्टं न सिध्यतीत्युक्तमिति ॥ एवमनुभाष्य परिहारमाह—तदनिरूपितकरणत्व(तत्त्व)स्येति ॥ अनिरूपितकरण(तत्त्व)त्वात्तवैतच्चोद्यं करणस्वरूपनिरूपणायां न सम्भवतीत्यर्थः। एतदेव स्पष्टीकर्तुं करणस्वरूपं निरूपयति—

---

१. इत्यत्रापि—**ग, घ.**
२. प्रधाने—**ख.**
३. भावनोपगमात्—**क, ख**; भावनाभ्युपगमात्—**ग, घ, ङ.**
४. 'तथा' नास्ति—**क, ख** मातृकयोः.
५. हानिरिति—**क, ख.**
६. अनिरूपिताकरणत्वात्—**ङ**; अनिरूपितकरणत्वात्—**क, ख.**
७. विषयत्वं च प्रतीतेः—**च.**

**तथा हि—**

**करणं खलु सर्वत्र कर्तृव्यापारगोचरः[१]।**
**तिरोदधाति कर्तारं प्रधानं तन्निबन्धनम् ॥ ३६ ॥**

**न खलु कर्तृव्यापारलक्षणभावनाप्त्या[२] धात्वर्थस्य कर्मत्व-प्रसङ्गः [३]करणत्वबाधो वा, [४]परश्वादिषु तथा प्रसङ्गात्। [५]न छिदा-**

---

तथाहि—

[६]करणं खलु सर्वत्र कर्तृव्यापारगोचरः ।
तिरोदधाति कर्तारं प्रधानं तन्निबन्धनम् ॥ (इति) ॥

अयमाशयः—यद्धि करणं परश्वादि तदेव सर्वत्र कर्तृव्यापारस्य साक्षाद्विषयः, न फलम्। फलन्तु करणव्यापारस्य साक्षाद्विषयः। ततश्च तन्निबन्धनं कर्तृव्यापारविषयभूत-परश्वादिकरणव्यापारनिबन्धनं प्रधानं फलं छिदा कर्तारं तिरोदधाति आरात्करोति। अथवा कर्तृव्यापारगोचरः करणं कर्तारं तिरोदधाति प्रधाननिष्पत्तेरारात्करोति, यस्मात्प्रधानं तन्नि-बन्धनं कर्तृव्यापारविषयभूतकरणव्यापारनिबन्धनमित्येवं ग्रन्थो योजयितव्यः।

इदानीं श्लोकस्यार्थाविष्करणायाह—न खलु कर्तृव्यापारलक्षणभावनाप्त्या धात्वर्थस्य कर्मत्वप्रसङ्गः, करणत्वबाधो वा, परश्वादिषु तथा प्रसङ्गात् इति॥ अयमर्थः—न कर्तृव्यापार-

---

१. गोचरं—**क.**
२. लक्षणभावनाव्याप्त्या धात्वर्थस्य—**क, ख**; लक्षणायां भावनायां धात्वर्थस्य—**ग, घ**; लक्षणभावनायां धात्वर्थस्य—**ङ.**
३. अकरणत्वं वा—**क, ख, ग, घ, ङ.**
४. परश्वादावपि प्रसङ्गात्—**क, ख**; परश्वादावपि तथा प्रसङ्गात्—**ग, घ**; परश्वादावतथात्वप्रसङ्गात्—**ङ.**
५. तथाहि—अधिकं वर्तते—**ग, घ, ङ, छ.**
६. करणं खलु सर्वत्रेति—**च.**

**दिषु[१] साक्षाद्व्याप्रियते कर्ता, [२]किन्तु परश्वादिकरणे[३]। [४]तद्व्यापारः तदुद्यमननिपातनादिलक्षणः[५] परशुगोचर एव। [६]अतः तस्याव्यवहितव्यापारतया क्रियासिद्धेः[७] साधकतमत्वम्। [८]तद्व्यापारायत्त-**

---

लक्षणभावनाव्याप्तिमात्रेण धात्वर्थस्यानभिमतं कर्मत्वं प्रसज्यते, अभिमतं वा करणत्वं बाध्यते, परश्वादावपि तथा प्रसङ्गात् कर्मकरणत्वबाधयोः प्रसङ्गादिति। एतदेव प्रपञ्चयति—न छिदादिषु साक्षाद्व्याप्रियते कर्ता, [९]किन्तु परश्वादिकरणं(णे)। तद्व्यापारः तदुद्यमननिपातनादिलक्षणं(णः) परशुगोचर एव। अतः तस्याव्यवहितव्यापारतया क्रियासिद्धेः साधकतमत्वम्। तद्व्यापारायत्तप्रवृत्तितया च करणस्य कर्तुः स्वातन्त्र्यमारादुपकारिणोऽपि। अन्यथा करणतैव [१०]न स्यादिति॥ अयमर्थः—न छिदादिषु फलेषु कर्ता साक्षात् करणव्यापारनिरपेक्षो व्याप्रियते। किन्तर्हि? यत्परश्वादि करणम्, तदेव साक्षाच्छिदादिषु व्याप्रियते। क्व तर्हि साक्षात्कर्तृव्यापार इत्यपेक्षायामुक्तम्—तद्व्यापारः तदुद्यमननिपातनादिलक्षणः परशुगोचर एवेति। तस्य [११]कर्तुर्व्यापारः तद्व्यापारः, तस्य परश्वादेरुद्यमननिपातनादिरूपः परश्वादिकरणगोचर एव, न छिदादिफलविषयः। कथन्तर्हि कर्तृव्यापारविषयस्य परश्वादेः करणतेत्याशङ्क्योक्तम्—तस्याव्यवहितव्यापारतया क्रियासिद्धेः साधकतमत्वमिति॥ तस्य परश्वादेरव्यवहितव्यापारतया क्रियाफलनिष्पत्तेः स्वव्यापारस्य (च) व्यवधानाभावात् साधकतमत्वं क्रियाफलनिष्पत्तौ प्रत्यासन्नोपकारकत्वादुपपद्यते। कथन्तर्हि परश्वादिकरणव्यापारव्यवहितस्य देवदत्तादेः कर्तृत्व-

---

१. छिदादिषु न—**ग**, घ, ङ.
२. अपि तु—**ग**, घ, ङ.
३. करणम्—**क**, ख.
४. तद्व्यापारास्तूद्यमन—**क**, ख, ग, घ, ङ.
५. लक्षणं—**क**.
६. 'अतः' नास्ति—**ख** मातृकायाम्। अत एव करणस्य—**ग**, घ; अत एव तस्याव्यवहित—**ङ**.
७. सिद्धौ—**क**, ख.
८. तद्व्यापारापेक्ष—**ग**, घ.
९. अपि तु—**छ**.
१०. 'न' नास्ति—**छ** मातृकायाम्।
११. कर्तृव्यापारः—**छ**.

**प्रवृत्तितया च करणस्य [1]कर्तुः स्वातन्त्र्यमारादुपकारिणोऽपि; अन्यथा [2]करणतैव न स्यात्।**

**अपि च—**

**साधनानामभावस्स्यात्कर्तृकर्मातिरेकिणाम्।**
**साधनानां नियोगो हि कर्तृव्यापार इष्यते॥ ३७॥**

---

मित्याशङ्क्योक्तम्—तद्व्यापारायत्तप्रवृत्तितया च करणस्य कर्तुः स्वातन्त्र्यमारादुपकारिणोऽपीति॥ तस्य कर्तुः व्यापार उद्यमननिपातनादिलक्षणो यः, तदायत्ता प्रवृत्तिः करणस्य यतः, अतः कर्तुर्देवदत्तादेः स्वातन्त्र्यमारादुपकारिणोऽप्युपपद्यते। स्वातन्त्र्यञ्च कर्तृत्वम्, न सन्निकृष्टोपकारकत्वम्। यदि पुनः कर्तृव्यापारविषयतामात्रेण सन्निकृष्टोपकारिणोऽपि करणता नेष्येत, तदा सर्वत्र करणतैव न स्यादिति। एतदुक्तम्—अन्यथा करणतैव न स्यादिति॥ यदा तु अन्यथा करणतैव स्यादिति नञ्रहितः पाठः, तदा अस्यायमर्थः—यदि करणव्यापारव्यवधानेन विना कर्तुः साक्षादेव फले व्यावृत्ति(प्रवृत्ति)रिष्येत, तदा कर्तुरेव(रपि) करणतैव स्यात्, फलं प्रति प्रत्यासन्नतरत्वात्, न कर्तृत्वमिति।

किञ्च कर्तृव्यापारव्याप्तिमात्रेण कर्मापत्तौ [3]करणत्वबाधे वा अभ्युपगम्यमानेऽनिष्टप्रसङ्गं चोदयति—अपि च—

साधनानामभावः स्यात्कर्तृकर्मातिरेकिणाम्।
साधनानां नियोगो हि कर्तृव्यापार इष्यते॥ (इति)॥

---

१. कर्तृस्वातन्त्र्यं—क; स्वातन्त्र्यव्यापारादुप—ङ. ३. कारणत्व—**च**.
२. करणत्वतैव न स्यात्—**क**; करणमेव स्यात्—**ग, घ, ङ**.

**प्रलीनेदानीं कर्तृकर्मातिरिक्तसाधनान्तरसङ्कथा[१], [२]साधन-नियोगः कर्तृव्यापार इति [३]तन्नियोगविषयतापत्त्या [४]सर्वत्र कर्म-त्वापातात्। [५]कस्तर्हि कर्मेतरविभागः[६]? कथञ्च करणपरिक्षयिणि[७]**

---

यदि कर्तृव्यापारविषयतामात्रेण करणत्वबाधः कर्मतापातश्चाभ्युपगम्यते, तदा कर्तृ-कर्मव्यतिरिक्तानामधिकरणादीनां कारकाणामभाव एव स्यात्। कथम्? साधननियोगो हि कर्तृव्यापारः। स च सर्वसाधनविषय इति सर्वेषां कर्मत्वप्रसङ्गादिति।

अस्य श्लोकस्यार्थाविष्करणायाह—प्रलीनेदानीं कर्तृकर्मातिरिक्तसाधनान्तरसङ्कथा, साधननियोगः कर्तृव्यापार इति तन्नियोगविषयतापत्त्या सर्वत्र कर्मा(र्मत्वा)पातात् इति॥ नात्र तिरोहितमिव किञ्चिदस्ति॥ यथा कर्तृव्यापारविषयत्वाविशेषेऽपि सर्वेषां [८]कारकाणां नैकान्ततः कर्मत्वमेव, किन्तु कारकान्तरभावोऽपीष्यते, तथा करणस्यापि कर्तृव्यापारविष-यस्यापि न कर्मत्वप्रसङ्ग इत्युक्ते चोदयति—कस्तर्हि कर्मेतरविभाग इति॥ कर्तृव्यापारविष-यत्वाविशेषे सति सर्वेषां कारकाणां, कर्तृ(र्म)कारकस्येतरेषां च कारकाणां कथं विभागः सम्भवति?। नहि तत्र विभागहेतुः कश्चिदुपलभ्यते करणवत्। यथाहि करणस्य कर्तृव्या-पारविषयस्य कर्मकारकात् [९]विभागे हेतुर्नास्ति इति कर्मत्वं प्रसक्तम्, तथा कारकान्तरेष्वपि कर्तृव्यापारविषयभूतेषु तत्प्रसङ्गः समान एव। [१०]कथमसिद्धेनासिद्धं साध्यते इत्यभिप्रायः कर्तृव्यापारस्य करणविषयत्वेऽन्यमपि [११]दोषमापादयति—कथञ्च करणपरिक्षयिणि कर्तृव्यापारे

---

१. साधनान्तरसत्कथा—**क**; साधनान्तर-कथा—**ग, घ.**

२. साधनान्तरनियोगः—**ग, घ, ङ.**

३. इति नियोगविषयताप्रतीत्या—**क, ख**; इति नियोगविषयतातिपत्त्या—**ग, घ**; इनि नियोगविषयताप्रति(पत्त्या)—**ङ.**

४. सर्वकर्म—**ङ.**

५. कथं तर्हि—**ग, घ, ङ.**

६. संविभागः—**ग, घ, ङ.**

७. परिक्षीणे—**ग, घ, ङ.**

८. कारकाणां तेनात्रान्ततः—**च.**

९. विभागो—**छ.**

१०. कथं सिद्धेना—**छ.**

११. दोषप्रसङ्गम्—**छ.**

कर्तृव्यापारे तदाप्तिविरहिणः[1] कर्मता । उच्यते—

[2] अन्यार्थाप्तिविवक्षायामकर्मातिशयाद्विना ।
उद्देशादन्यवृत्त्यापि फलमेवेष्यतेतराम् ॥ ३८ ॥

**तदाप्तिविरहिणः कर्मतेति** । अयमर्थः — करणविषयत्वे कर्तृव्यापारस्य करण एव पर्यवसानं स्यात्, न कर्मकारकव्याप्तिः । ततश्च कर्तृव्यापारव्याप्तिविरहिणः कर्मणः कथं कर्मतेति । अस्य चोद्यद्वयस्योत्तरमाह— **उच्यते**—

**अन्यार्थाप्तिविवक्षायामकर्मातिशयाद्विना ।**
**उद्देशादन्यवृत्त्यापि फलमेवेष्यतेतराम् ॥**

अयमाशयः — कर्तृव्यापारविषयतां प्रतिपद्यमानमपि करणादिकारकं कर्म न संभवति । अन्यार्थाप्तिविवक्षायां अन्यस्यार्थस्य प्राप्तिः यदा विवक्ष्यते उद्देश्यतयाभिसन्धीयते तदान्यत् कारकं नान्तरीयकतया विषयतां प्रतिपद्यमानमपि न कर्म भवति। अतिशयाभावादीप्सितत्वस्य, ईप्सिततमत्वस्य च कर्मलक्षणत्वात् । तस्मान्न करणस्य कर्मताप्रसङ्गः इति प्रथमचोद्यपरिहारः श्लोकप्रथमार्धस्यार्थः । [3] उद्देशादित्युत्तरार्धेन द्वितीयस्य चोद्यस्योत्तरमुक्तम् । कथम्? क्रिययाप्तुमिष्टतमं हि कर्म, न क्रियाविषयमात्रम् । तत्र यद्यन्यगोचरया क्रियया अन्यदाप्तुमिष्येत ततः कर्म भवत्येवेति ।

---

1. विरहिणः फलस्य (ख, ग, घ, ङ.)
2. विवक्षायां न कर्मा (ङ.)
3. उत्तरार्धेन चोद्यस्योत्तरं (छ.)

[1] यत्खलूद्दिष्टवस्त्वन्तराया [2] [3] नान्तरीयकत्वेन [4] विषयतामुपयदभि-
संहितं[5] तदकर्म अतिशयाभावात् । [6] उद्देश्यं तत्कर्मान्यगोचरयापि क्रियया तस्यैवाप्तु-

अत्रैवमक्षरयोजना — अन्यवृत्त्या अन्यगोचरयापि क्रियया फलमेवातिशयेनाप्तु-
मेष्यते उद्देशादभिसन्धानादिति । एतद्विवृणोति—

**यत् खलूद्दिष्टवस्त्वन्तराया नान्तरीयकत्वेन विषयताम् उपयदभिसंहितं तदकर्मातिशयाभावादिति** पूर्वार्धस्य [7] विवरणम् । अस्यायमर्थः — उद्दिष्टं वस्त्वन्तरं यस्यां क्रियायां सेयमुद्दिष्टवस्त्वन्तरा क्रिया तस्या यत्तन्नान्तरीयकत्वेनोद्दिष्टवस्त्वन्तर-विषयत्वान्यथानुपपत्त्या विषयतामुपयदभिसंहितं भवति तन्न कर्म अतिशयाभावा-दीप्सातिशयाभावात् । तस्मान्न करणस्य कर्मताप्रसङ्ग इति ।

उत्तरार्धं विवृणोति — **उद्देश्यं तत् कर्मान्यगोचरयापि क्रियया तस्यैवाप्तु-**

---

1. यत् खल्वपदिष्ट (ग, घ.)
2. वस्त्वन्तरायाः क्रियायाः (ग.); वस्त्वन्तरानान्तरी (ख.)
3. क्रियाया दर्शनेऽविरुद्धम् (ङ.)
4. तामुपैति (ग, घ, ङ.); विषयतोपैति (क.)
5. अनभिहितं तदकर्म इच्छातिशयाभावात् (ख.); अनभिसंहितं तत्कर्म, इच्छाविषयाभावात् (क.) अभिसंहितं नेदं कर्म, इच्छाविषयाभावात् (ग, घ, ङ.)
6. फलन्तु कर्मान्यसमवेतयापि क्रियया तस्याप्तुमिष्यमाणत्वात्तदभिसन्धिप्रवृत्ताया (क.)
7. विवरणम्, अयमर्थः (छ.)

**मिष्यमाणत्वात् तदभिसन्धिप्रवर्तिताया इतरसंबन्धस्य नान्तरीयकत्वात् ।**

**अतः करणस्यापि धात्वर्थस्य साध्यत्वप्रतीतिनिदर्शने [1] अविरुद्धे ।**

**मिष्यमाणत्वात् तदभिसन्धिप्रवर्तितायाः इतरसंबन्धस्य नान्तरीयकत्वादिति ।** अस्यायमर्थः — यदुद्देशेन या क्रिया निर्वर्त्यते तत्तस्याः कर्म । कथं तर्हि तद्व्यतिरिक्तकरणादिगोचरायाः प्रवृत्तेः तत् कर्म भवतीत्याशङ्क्योक्तम् **अन्यगोचरयापी**त्यादि । करणादिगोचरयापि क्रियया तस्य फलस्याप्तुमिष्यमाणत्वात् ।

कथं तर्हि फलस्यैवाप्तुमिष्यमाणत्वे तद्व्यतिरिक्तस्य क्रियासंबन्ध इत्याशङ्क्योक्तम्— **तदभिसन्धिप्रवर्तिताया** इति । [2] फलाभिसन्धिप्रवर्तितायाः क्रियाया इतरेण करणादिना संबन्धो नान्तरीयकोऽन्यथानुपपत्तिकृतः साक्षात् फलसंबन्धानुपपत्तिकृतः साक्षात् फलसंबन्धानुपपत्तिप्रयुक्तः । क्रियायाः करणादिना संबन्धो न फलेनेव स्वरूपप्रयुक्तः । [3] फलार्थितया प्रवर्तमानः पुरुषः साक्षात् फले प्रवर्तितुं अशक्नुवन् अन्यथानुपपत्त्या करणादि स्वेन व्यापारेण गोचरीकरोति । अतः कर्तृव्यापारस्य [4] फलसंबन्धोपपादकत्वेन करणसंबन्ध इति न करणमात्रपरिक्षयितया कर्मव्याप्तिविरह आशङ्कनीय इत्यभिप्रायः ।

एवम् उक्तेन प्रकारेण भावनायाः करणभूतस्यापि सतो धात्वर्थस्य नान्तरीयकं साध्यत्वमपि विद्यत इति या तस्य साध्यत्वप्रतीतिस्तिङन्ते भावनाहेतुत्वेनोक्ता, यच्च भेदेन निदर्शनं हेतुत्वेनोक्तं ते अविरुद्धे इति दर्शयति—**अतः करणस्यापि धात्वर्थस्य साध्यत्वप्रतीतिनिदर्शने अविरुद्धे** इति ।

---

1. न विरुद्ध्येते (क॰)
2. सन्ध्या (छ॰)
3. फलार्थितया हि (छ.)
4. सम्बन्धानुपपादकत्वेन (क, ख, ग, घ, ङ, च.)

**यथा परशुना छिनत्तीति [1] परशोरुद्यमननिपात्यमानत्वप्रतीतिः परशुमुद्यच्छति निपातयति द्विधाभवनायेति निदर्शनं [2] प्रयुङ्क्ते चेति ।**

**यत्तु कर्तृव्यापारोऽधिश्रयणादिः धात्वर्थान्तरात्मक इति,**

एतदेव दृष्टान्तेन द्रढयति—**यथा परशुना च्छिनत्तीति परशोरुद्यमन-निपात्यमानत्वप्रतीतिः परशुमुद्यच्छति [3] निपातयति द्विधाभवनायेति ।**

परशुना च्छिनत्तीत्युक्ते परशोरुद्यमननिपातनविषया प्रतीतिरस्त्येव द्विधाभवनाय परशुमुद्यच्छति निपातयतीति न तथा परशुना छिनत्तीत्यस्यार्थनिदर्शनं कुर्वन्ति — परशुना छिनत्तीत्यस्यायमर्थः — परशुमुद्यच्छति निपातयति द्विधाभवनायेति । तथापि न परशोः कर्मता करणत्वबाधो वा । एवं धात्वर्थस्यापीत्यभिप्रायः । इदानीं परोक्तदूषणान्तरमनुभाषते — **यत्तु कर्तृव्यापारोऽधिश्रयणादिर्धात्वर्थान्तरात्मक इति** —

**कर्तृव्यापार इष्टश्च पच्यादौ यदि भावना ।**
**धात्वर्थान्तररूपः स्यात् सोऽप्यधिश्रयणादिकः ॥**

इत्यत्र यदुक्तं 'यदि कर्तृव्यापारो भावनाभ्युपगम्यते स च पचत्यादावधिश्रयणादिकः

---

1. रुद्यम्यमानत्वनिपात्यमानत्व प्रतीतिः (ग.) ; उद्यमननिपात्यमानताप्रतीतिः (क.)
2. प्रयुक्तं चेति (ग, घ, ङ.)
3. निपातयतीति (छ.)

[1]अत्राहुः —

कथ्यमानाद्रूपभेदाद् द्विधा [2]धात्वर्थसङ्गतिः ।
अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति ॥ ३९ ॥

सर्वथा [3]पचति [4]यजतीति प्राक्प्रयुज्यमानगोचरो[5] न [6]भवतीति प्रतिपादितम्, धात्वन्तरैस्त्वभिधानं करोतिभावयतिभ्यामिव[7] न पक्षक्षतिमावहति।

अधिश्रयत्यादिधात्वभिधेयगुणविशेषवैलक्षण्येन [8]करोत्यर्थ एव । तेन न धात्वर्थतामतिवर्तत इति । एवमनुभाष्योत्तरमाह—**अत्राहुः** —

**कथ्यमानाद्रूपभेदाद् द्विधा धात्वर्थसङ्गतिः ।**
**अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति ॥**

अयमर्थः — यद्यपि धात्वन्तरार्थः कर्तृव्यापारोऽधिश्रयणादिः तथापि पचतीत्यत्र भावनात्वं प्रतिपद्यत एव भाव्यभावनानुकूलात्मत्वात् । तथा हि पचतीत्यत्र पाकस्याधिश्रयणस्य च रूपभेदः कथ्यते — पाकं करोतीति । ततश्च कथ्यमानाद्रूपभेदाद् द्विधा धात्वर्थयोः पाकाधिश्रयणयोः सङ्गतिः, पाकस्य कारकत्वेन पाकम् इत्येवं कर्मतया निर्दिश्यमानत्वात् अधिश्रयणादेः क्रियात्वेन करोतीत्येवं निर्दिश्यमानत्वात् । अतो विषयान्तरे धात्वर्थस्यापि सतः अधिश्रयणादेः कर्तृव्यापारस्य पचतीत्यत्रान्योत्पादसमर्थव्यापाररूपतया भावनात्वे संभवति न कथञ्चित् भावना दुष्यतीति, एतद्विवृणोति — **सर्वथा पचति यजतीति प्राक् प्रयुज्यमानगोचरो न भवतीति प्रतिपादितम् धात्वन्तरैस्त्वभिधानं करोतिभावयतिभ्यामिव न पक्षक्षतिमावहति** इति ।

---

1. तत्राहुः (क, ख.) : तत्रोच्यते (ग, घ, ङ.)
2. भिन्ना धात्वन्तरावृतेः (ग, घ, ङ.)
3. पचतीति (ङ.)
4. यजतीति प्रयुज्यमान (क, ख.)
5. मानधातुगोचरो (ग, घ, ङ.)
6. भावनेति (क, ख.)
7. भवतिभ्यामिव (क, ख.)
8. व्यापारात्मा करोत्यर्थः (छ.)

अयमभिप्रायः — भवतु धात्वन्तरैरभिधानं कर्तृव्यापारस्य । सर्वथा पचति यजतीत्याख्यातप्रत्ययात् पूर्वो यो धातुः प्रयुज्यते तस्य धातोर्गोचरो न भवति कर्तृव्यापारः, किन्त्वाख्यातगोचर एव । धातोस्तत्सङ्कल्पविक्लित्त्यादिरेव गोचर [1] इत्येतत्प्रतिपादितम् 'विक्लित्तिमात्रसङ्कल्प' इत्यादौ । यत्त्वधिश्रयत्यादिधात्वन्तरैरभिधानं तन्न काञ्चिदपि पक्षक्षतिभावहति, यथा करोतिभावयतिभ्यामभिधानम् । नह्येकान्ततः कर्तृव्यापारस्य धातुगोचरत्वं नेष्यते । विषयान्तरे धातुगोचरत्वमपीष्यत एव । न चैतावता सर्वत्र धात्वर्थतां नातिवर्तते । यत्र त्वन्योत्पादसमर्थव्यापारात्मना निरूप्यते तत्र भावनात्वं प्रत्ययार्थत्वं च प्रतिपद्यत इत्यर्थः ।

केचिदस्मिन् श्लोके द्विधाशब्दस्थाने विना शब्दं पठन्ति 'कथ्यमानाद्रूपभेदाद्विना धात्वर्थसङ्गतिः' इति, तेषामेषोऽर्थः —धात्वर्थस्याधिश्रयणादेः अधिश्रयत्यादिना धातुना या वाच्यतया सङ्गतिः, धातोर्वा अधिश्रयत्यादेरधिश्रयणादिनार्थेन या वाचकत्वेन सङ्गतिः सा कथ्यमानाद्रूपभेदाद्विना । योऽयं भाव्यभवनानुकूलात्मा रूपभेदोऽधिश्रयणादेः कर्तृव्यापारस्य सोऽधिश्रयत्यादिना धातुना कथ्यमानो न भवति । किं तु अधिश्रयणादिरूपेण सोऽभिधीयते । ततश्चान्योत्पादानुकूलात्मा कर्तृव्यापारः धात्वर्थतामतिवर्तते, प्रपद्यते च भावनात्वं प्रत्ययार्थत्वं चेत्यभिप्रायः । अस्मिन् पक्षे सर्वथेत्यादिः विवरणग्रन्थोऽप्येतदनुसारेण व्याख्येयः । एवमधिश्रयत्यादिधात्वन्तरार्थस्यैव कर्तृव्यापारस्य पचतीत्यत्रान्योत्पादानुकूलतया भावनात्वं प्रत्ययार्थत्वं

---

1. इत्यादि (च.)

[1] धातूनामभिधानीयान्कर्तृकर्मसमाश्रयान् ।
[2] लब्धात्मनोऽक्रियारूपान्विशेषान्प्रतिजानते ॥ ४० ॥

[3] यथा श्रयतेश्चुल्लीस्थालीसंयोगविशेषः [4] आसिञ्चतेरासिच्यमानाधार-[5] संयोगविशेषः । एवं सर्वत्र यावत्पचेस्तण्डुलावयवानां [6] विभागाः प्रशिथिलावयव [7] संयोगविभागाः ।

चाभ्युपगम्यवादेनोक्त्वा इदानीं पाकाधिश्रयणादिसाधारणीं धात्वर्थातिरिच्यमानशरीरां भावनां प्रतिपादयितुं धात्वर्थस्वरूपनिरूपणमाह —

धातूनामभिधानीयान् कर्तृकर्मसमाश्रयान् ।
लब्धात्मनोऽक्रियारूपान् विशेषान् प्रतिजानते ॥

अयमभिप्रायः — सिद्धस्वभावा एव गुणविशेषा धात्वर्थाः, न पुनर्व्यापारात्मानः इति । अत्रैषाऽक्षरयोजना — लब्धात्मनः [8] सिद्धस्वभावान् गुणविशेषान् अक्रियारूपान् धातूनामभिधानीयान् अभिधेयान् प्रतिजानते विद्वांसः । ते पुनर्गुणविशेषाः धात्वभिधेयाः किमाश्रया इत्यपेक्षायामुक्तम् —- **कर्तृकर्मसमाश्रयानिति** ।

कर्तृस्थाः केचिद्धात्वर्थाः, केचित्तु कर्मस्था इति । एतदेव स्पष्टीकरोति — **यथा श्रयतेश्चुल्लीस्थालीसंयोगविशेष आसिञ्चतेरासिच्यमानाधारसंयोगविशेषः एवं सर्वत्र यावत्, पचेस्तण्डुलावयवानां विभागाः प्रशिथिलावयवसंयोगविभागाः** इति ।

---

1. अथवा (ख, ग) ; अपि च (ङ.)
2. लब्धात्मनः क्रिया (ग, घ.)
3. यथाधिश्रयतेः (ख, ग.)
4. आसिञ्चतेरपि सिच्य (क, ख.)
5. संयोगभेदः (क, ग) ; संयोगविभागभेदः (ख.)
6. विभागः (ग, घ, ङ.)
7. संयोगा वा (क.) ; संयोगो वा (ग, घ, ङ.)
8. स्वभावान् विशेषान् गुणविशेषान् (छ.)

**उदासीनत्वविच्छेदलक्ष्यं [1] धात्वर्थकारणम् ।**
**स्पन्दव्यापारपर्यायं[2] करोत्यर्थं प्रचक्षते ॥ ४१ ॥**

अस्यायमर्थः — चुल्लीस्थाल्योर्यः संयोगविशेषः कर्माधिकरणयोर्व्यासज्य वर्तमानः सोऽधिश्रयतेः धातोरर्थः । आसिञ्चतेः पुनः आसिच्यमानस्योदकस्य तदाधारेण स्थाल्यादिना यः संयोगः सोऽर्थः । एवं सर्वत्र यावद्वाच्यं द्रष्टव्यम् । पचतेस्तु धातोस्तण्डुलावयवविभागाः प्रशिथिलावयवसंयोगा वा अवयवस्था अपि तद्द्वारेणावयवितण्डुलसंबद्धाः कर्मस्था अभिधेयाः । एवं यजतीत्यादिष्वप्यूह्यम् ।

इदानीं उक्तलक्षणधात्वर्थवैलक्षण्येन भावनास्वरूपं निरूपयति—

**उदासीनत्वविच्छेदलक्ष्यं धात्वर्थकारणम् ।**
**स्पन्दव्यापारपर्यायं करोत्यर्थं प्रचक्षते ॥**

अयमाशयः — धात्वभिधेयगुणविशेषवैलक्षण्येन व्यापारात्मा करोत्यर्थः प्रत्यक्षेणावसीयते इति । इदानीमक्षरानुलोम्यं प्रदर्श्यते — उदासीनत्वविच्छेदेनौदासीन्यप्रच्युत्या लक्ष्यं निरूप्यमाणाकरं धात्वर्थकारणं धात्वर्थस्य हेतुभूतं तत एव तस्माद् भिन्नं स्पन्दव्यापारशब्दाभ्यां पर्यायेणाभिधीयमानं करोत्यर्थं प्रचक्षते विचक्षणा इति ।

---

1. लक्षणं त्वर्थकारणम् (ङ.)
2. पर्यायः (ख.)

[1]तथाहि—अधिश्रयति [2]उदकमासिञ्चति पचति पठतीति वा अधिश्रयणादिसंयोगभेदेभ्यो[3] व्यापारात्मको भेदेन करोति स्पन्दते चेष्टते व्याप्रियते इति व्यापाररूपमध्यक्ष्यते[4] । [5]न चैष [6]तज्जन्यत्वाभिमतविशेषालम्बनः प्रत्ययः, यतः—

व्यापारबुद्ध्युपजनो न संयोगविभागयोः ।
सतोरपि हि चेष्टित्वा विरामं समुपागते ॥ ४२ ॥

एतदेव प्रपञ्चयति — तथाहि- अधिश्रयत्युदकमासिञ्चति पचति पठतीति वाधिश्रयणादिसंयोगभेदेभ्यो व्यापारात्मको भेदेन करोति स्पन्दते चेष्टते व्याप्रियते इति व्यापाररूपमध्यक्ष्यते इति । गुणविशेषेभ्यो धात्वर्थेभ्यो भेदेन [7]व्यापारात्मा करोत्यर्थः पचति पठति गच्छतीति प्रत्यक्षेणानुभूयते इत्यभिप्रायः ।

ननु एष प्रत्ययः तज्जन्यत्वाभिमतसंयोगविभागालम्बन इत्युक्तं पुरस्तादित्याशङ्कयाह —

न चैष तज्जन्यत्वाभिमतविशेषालम्बनः प्रत्ययः, यतः—
व्यापारबुद्ध्युपजनो न संयोगविभागयोः ।
सतोरपि हि चेष्टित्वा विरामं समुपागते ॥

---

1. यथा हि स्थाली अधि (ङ.)
2. सिञ्चति पठतीति (क, ख.); सिञ्चति पचति चेति (ग, घ.)
3. भेदेभ्यो भेदेन करोति (क, ख.); भेदेभ्योऽव्यापारात्मकेभ्यो भेदेन (ग, घ, ङ.)
4. मवेक्ष्यते (ग, घ, ङ.)
5. न वैषः (क, ख.)
6. जन्याभिमत (ग, घ, ङ.); मतगुणविशेषालम्बनः (क, ख.); मतसंयोगविभागालम्बन एव प्रत्ययः (ग, घ, ङ.)
7. अव्यापारात्मकेभ्यो भेदेन (छ.)

[1] **न चलित्वा** [2] **स्थिते क्रियाप्रभवपूर्वोत्तरदेशविभाग** [3] **संयोगाभावः, तदालम्बनो व्यापारप्रत्ययो न जातु विरमेत् ।**

अयमाशयः — न चलतीति व्यापारप्रत्ययः तज्जन्यत्वाभिमतसंयोगविभागमात्रालम्बनो भवितुमर्हति, चलित्वा स्थितेऽपि देवदत्ते तद्भावप्रसङ्गात् । संयोगविभागयोस्तत्रापि भावात् । न चलित्वा स्थिते चलतीति प्रत्ययोऽस्ति । तस्मान्नैष संयोगविभागमात्रालम्बनः, किन्तु तद्धेतुभूतव्यापारालम्बन एवेति । अत्रैषाक्षरयोजना — सतोरपि संयोगविभागयोः व्यापारबुद्धेश्चलतीत्येवंरूपाया उपजन उत्पत्तिर्नास्ति । क्वेदं दृष्टं इत्यपेक्षायामुक्तं — चेष्टित्वा चेष्टां कृत्वा विराममवसानं समुपागते प्राप्ते देवदत्तादाविति । अतः प्रागपि न तदालम्बनो भवितुमर्हतीति वाक्यशेषः । अस्यैवार्थस्य स्पष्टीकरणायाह — **न चलित्वा स्थिते क्रियाप्रभवपूर्वोत्तरदेशविभागसंयोगाभावस्तदालम्बनो व्यापारप्रत्ययो न जातु विरमेदिति ।**

अयमर्थः — क्रियाप्रभवौ यौ पूर्वोत्तरदेशसंयोगविभागौ न तयोश्चलित्वा [4] स्थितेऽप्यभावः । किं तु भाव एव । अतः तदालम्बनोऽभ्युपगम्यमानो व्यापारप्रत्ययो न कदाचिदपि विरामं गच्छेत् । गच्छति च विरामं चलित्वा स्थिते चलतीति प्रत्ययः । यदप्येतद्दोषपरिजिहीर्षयोक्तम् ‘अच्छिन्नोत्पत्तयो देशविभागत्यागसंगमाः’ इति ।

---

1. न हि चलित्वा (ग, घ, ङ.)
2. स्थितस्य (ख, ग, घ, ङ.)
3. संयोगाभावः, अतः तदा (ख, ग, घ, ङ.)
4. स्थितेरप्यभावः (छ.)

[1] विभागेन समुच्छेदात्संयोगप्रचयः कुतः ।
भविष्यद्वृत्तिसंयोगविभागाध्यक्षता कथम् ॥ ४३ ॥

अत्राह —

विभागेन समुच्छेदात्संयोगप्रचयः कुतः ।
भविष्यद्वृत्तिसंयोगविभागाध्यक्षता कथम् ॥

अयमाशयः — न संयोगप्रचयः क्वचिदपि संभवति, पूर्वोत्तरसंयोगयोः सहवृत्त्यसंभवात् । तदभावे प्रचयानुपपत्तेः । कथं पुनः पूर्वोत्तरसंयोगयोः साहित्याभावः? पूर्वविभागेन विनोत्तरसंयोगोत्पत्त्यनुपपत्तेः, विभागेन च पूर्वसंयोगस्य समुच्छेदादुत्तरसंयोगस्य प्राक्तनविभागसमुच्छिन्नसंयोगेन न साहित्यं संभवति । अतो न संयोगप्रचयः[2] ।

ननु संयोगसमुच्छेदात् कोऽन्यो विभागो नाम? स एव खलु सन्[3] । नह्यनयोर्भेदमुपलभामहे । सत्यपि वानयार्भेदे पौर्वापर्यं कुतोऽवसीयते पूर्वं विभागः पश्चात् संयोगसमुच्छेद इति? असति पौर्वापर्ये भेदे च विभागेन समुच्छेदादिति कथं तयोर्हेतुफलभावाभिधानमिति? अत्रोच्यते — क्रियाजन्याद्विभागात् पूर्वसंयोगसमुच्छेद [4]उत्तरदेशसंयोग इत्येवं तावत् प्रक्रिया । न च संयोगसमुच्छेदविभागयोरेकत्वम्, विभागस्यापि संयोगवद्भावान्तरत्वात् । संयोगाभावव्यतिरेकेण विभागो नामान्यो भावो नोपलभ्यत इति चेन्न, संयोगेऽपि तुल्यत्वात् । सोऽपि हि विभागाभावव्यतिरेकेण नोपलभ्यत इति वदन्न दण्डैः पराणुद्यते । संयोगविनाशादन्य एव विभागः तद्धेतुभूतः । यच्चोक्तमनयोः पौर्वापर्यं नानुभूयत इति, सत्यं, अतिसूक्ष्मत्वात् क्षणभेदस्यानुभवाभावः

---

1. अत्राह — विभागेन समुच्छेदादिति (च.)
2. प्रचयो न हि (ग, घ, ङ.)
3. सः (छ.)
4. उत्तरसंयोगः (छ.)

[1-2] **यदप्यविच्छिन्नोत्पाददेशसंयोगविभागप्रचयालम्बन** [3] इति,

सुकुमारोत्पलपत्रशतच्छेदादिष्विवेति सन्तोष्टव्यम्। अथवा संयोग(नाश) एव विभागो नान्यस्तथापि तत्पूर्वक एवोत्तरसंयोग इति विभागव्यवहितत्वान्न पूर्वोत्तरयोः संयोगयोः साहित्यम्। अतो न तत्प्रचयः। ननु पूर्वविभागोत्तरसंयोगयोर्यौगपद्यं विद्यते। न हि तयोः क्षणभेदे प्रमाणमस्ति। न चानयोः कार्यकारणभावः सिद्धः, येन तद्बलात् पूर्वापरकालसंबन्धोऽवधार्येत। अन्वयव्यतिरेकौ चानयोरनवधारितपौर्वापर्ययोर्न कार्यकारणभावं प्रमातुं शक्नुतः, सव्यदक्षिणविषाणान्वयव्यतिरेकवत्। सत्यपि कार्यकारणभावे क्रमपूर्वं यौगपद्यं विद्यते। तस्मात् पूर्वविभागोत्तरसंयोगयोः साहित्यं विद्यत इति चेत्, उच्यते— भवतु तयोः साहित्यम्। किमायातं प्रकृते? तयोः प्रत्ययविषयत्वं स्यादिति चेन्न, चलित्वा स्थितेऽपि प्रसङ्ग इत्युक्तोत्तरत्वात्। एतेन विभागप्रचयस्यापि चलतिप्रत्ययविषयत्वं प्रत्युक्तम्, चलित्वा स्थितेऽपि तद्भावात्। अतो विभागप्रचयस्य केवलस्यैव संयोगसहितस्य वा चलित्वा स्थितेऽपि भावात् संयोगप्रचयस्य विभागेन समुच्छेदात् स्वयमभावान्न चलतिप्रत्ययस्य विषयतेति स्थितम्।

ननु पूर्वोत्तरसंयोगानामसहभावेऽपि एकाश्रयवृत्तितया प्रचलिताः सन्तः चलतिबुद्धिविषया भविष्यन्तीति एषा शङ्का अपाकृता भविष्यद्वृत्तीत्यादिश्लोकोत्तरार्धेन। कथम्? एवं हि ब्रुवाणेन भविष्यतामपि संयोगविभागानां वर्तमानैः सह प्रत्यक्षविषयतोक्ता स्यात्। न चैतद्युक्तम्, प्रत्यक्षस्य वर्तमानमात्रविषयत्वादिति।

अत्राक्षरानुलोम्यं प्रदर्श्यते— भविष्यद्वृत्तयः भविष्यत्कालसंबन्धिनो ये संयोगविभागास्तेषामध्यक्षता प्रत्यर्थि(क्ष)ता कथं? कथंचिदपि नोपपद्यत इति। इदानीमस्यार्थस्य स्पष्टीकरणायाह—**यदप्यविच्छिन्नोत्पादसंयोगप्रचयालम्बन इति,**

---

1. यद्यप्यवि (क, ग, घ, ङ.)
2. उत्पादसंयोग (क.)
3. प्रचयालम्बनमिति (ख.)

**तदपि न सम्यक् । [1]नह्युत्तरसंयोगः पूर्वविभागादृते । न [2]विभागः संयोगेन [3]सहैकत्र । [4]तद्विभागोच्छेदात्कुतस्तत्प्रचयः ?**

**[5]अच्छिन्नोत्पादश्च [6]नियोगभाव्युत्तरसमवेतता [7]वर्तमानानां । तेषु वर्तमानानागतेषु [8] तदविषयं कथमिन्द्रियं धियं जनयेत् ?**

**तदपि न सम्यगिति ।** अनेन ग्रन्थेन श्लोकव्यावर्त्यामाशङ्कां निदर्श्य तन्निराकरणं प्रतिजानीते । तत्र हेतुमाह — **नह्युत्तरसंयोगः पूर्वविभागादृते । न विभागः संयोगेन सहैकत्र । तद्विभागोच्छेदात् संयोगस्य कुतस्तत्प्रचय** इति ।

अयमर्थः — न तावत् पूर्वदेशविभागमन्तरेणोत्तरदेशसंयोग. संभवति, किमतो यद्येवमित्याशङ्क्योक्तं— 'न विभागः संयोगेन सहैकत्र' इति । उत्तरदेशसंयोगहेतुभूतो विभागः पूर्वसंयोगेन सहैकत्र क्षणे न वर्तते । अत्र हेतूक्तिः — [9]तद्विभागोच्छेदात् संयोगस्येति । उत्तरसंयोगहेतुभूतेन विभागेन पूर्वसंयोगस्योच्छेदात् तत्र कुतस्तत्-प्रचयः ? तस्य संयोगस्य प्रचयः कुतः ? न कथञ्चिदप्युपपद्यते संयोगप्रचय इत्यर्थः ।

एवं श्लोकपूर्वार्धं व्याख्यायेदानीं उत्तरार्धं व्याचष्टे — **अच्छिन्नोत्पादश्च नियोगभाव्युत्तरसमवेतता वर्तमानानां । तेषु वर्तमानानागतेषु तदविषयं कथं इन्द्रियं धियं जनयेदिति** ।

---

1. उत्तरदेश (ग, घ, ङ.)
2. विभागेन संयोगेन (क.) ; न च विभागः संयोगेन (ग, घ.)
3. सहैव वा (ग, घ, ङ.)
4. संयोगस्य कुतस्तत्प्रचयः (क.) ; तद्विभागेनोच्छेदात् कुतस्तत्प्रचयः (ग, घ, ङ.)
5. अविच्छिन्नो (क, ख, ग, घ, ङ.)
6. नियोगभवाप्युत्तर (क.) ; नियोगभवोऽपि (ख ) ; नियोगभाव्युत्तरकालानां (ग, घ, ङ.)
7. स वर्तमानानां (ग, घ, ङ.)
8. गतेषु कथमिन्द्रियं (ग, घ, ङ.) ; तत्र वर्तमानां धियं जनयेत् (ख.) ; तत्र वर्तमानां धियन्तु ...... (क.)
9. तद्विभागेनोच्छेदात् (छ.)

**मनोऽपि चागणितकुशलस्य [1]नैवमर्थम् ।**

**[2]अपि च—स्थाणौ पूर्वोत्तरश्येनाभ्यां[3] संयोगविभागाभ्यां [4]व्यापारधीः स्यात् ।**

अस्यार्थः—निरस्ते साहित्ये अच्छिन्नोत्पादवाचा वर्तमानानां [5]संयोगादीनां उत्तरकालेऽवश्यं भाविभिः संयोगैरेकस्मिन्नाश्रये समवायो वाच्यः । ततश्चानागतैः संभूय वर्तमानाः संयोगविभागाः चलतिप्रत्ययगोचरा उपेताः स्युः । तच्चानुपपन्नम्, इन्द्रियस्य वर्तमानमात्रविषयत्वात् अनागतविषयबुद्ध्युत्पादकत्वानुपपत्तेरिति ।

ननु मा भूत् बाह्यमिन्द्रियमनागतविषयावगाहि, मनस्तु भविष्यतीत्याशङ्क्याह—**मनोऽपि चागणितकुशलस्य नैवमर्थमिति ।**

गणितशब्देन मानसोऽभ्यासो योगोऽभिधीयते । तत्कुशलमस्य [6]मनः अनागतादि-विषयमपि भवति । यः पुनरयोगकुशलस्तस्य मनो नैवंजातीयकमर्थमवगमयितुमलं, बाह्येन्द्रियापेक्षप्रवृत्तित्वादिति । अथवा गणितकुशलो दैवज्ञः । अगणितकुशलोऽदैवज्ञः इति । इतोऽपि न संयोगविभागमात्रालम्बनश्चलतिप्रत्ययः इत्याह—**अपि च स्थाणौ पूर्वोत्तरश्येनाभ्यां संयोगविभागाभ्यां व्यापारधीः स्यादिति ।** स्थाणावपि श्येनद्वय-संयोगविभागवति चलतिप्रत्ययप्रसङ्गः ।

---

1. नैव समर्थम् (ग, घ, ङ.)
2. नैवमर्थम्, अपि च—अनयोर्मध्येऽयं भागोऽधिकं दृश्यते (ग, घ, ङ.) मातृकासु—'यथैकादिक्रमेण गणयतो विंशत्यादिषु विंशत्यादिज्ञानं भवति, नागणयतः । तद्वदिह संयोग-विभागान्गणयतः चलतीति बुद्धिः स्यान्नागणयतः ।'
3. श्येननिबन्धनाभ्यां (ग, घ, ङ.)
4. व्यापारगीः (क.)
5. संयोगानां (छ.)
6. मनोगतादि (छ.)

**आधारदेशसंयोगविभागाभ्यां सेति[1] च न युक्तम्। तथाहि—**

**जलावयवसंयोगविभागौ स्थिरमूर्तिषु।**
**जलाधारेषु मत्स्येषु व्यापारप्रत्ययाद्विना ॥ ४४ ॥**

**प्रतीतं हि जलं देशो मत्स्यानाम्, न स्थाणोरिव श्येनो न देशः।**

ननु आधारसंयोगविभागाभ्यां व्यापारधीः [2]संभवति, न संयोगविभागमात्रेण। न च स्थाणोराधारसंयोगविभागौ स्त इत्याशङ्क्याह— **आधारदेशसंयोगविभागाभ्यां सेति च न युक्तमिति।** सा व्यापारधीराधारदेशेन(यौ) संयोगविभागौ ताभ्यामेव भवतीत्येतन्न युक्तमित्यर्थः। एतदुपपादयति—**तथाहि—**

**जलावयवसंयोगविभागौ स्थिरमूर्तिषु।**
**जलाधारेषु मत्स्येषु व्यापारप्रत्ययाद्विना ॥**

अयमर्थः— आधारदेशसंयोगविभागयोः सतोरपि जलाधारेषु मत्स्येषु स्थिरमूर्तिषु व्यापारप्रत्ययो न दृष्टः। तस्मान्नैष तदालम्बन इति।

अत्रैषाक्षरयोजना— जलेन सह स्वावयवानां यौ संयोगविभागौ स्थिरमूर्तिषु निश्चलशरीरेषु मत्स्येषु तौ व्यापारप्रत्ययाद्विना दृष्टाविति। एतदेव व्यनक्ति— **प्रतीतं हि जलं देशो मत्स्यानां, न स्थाणोरिव श्येनो न देशः।**

---

1. सेति न युक्तम् (क, ख.); मेति चेत्, नदयुक्तम् (ग, घ, ङ)
2. भवति (छ.)

[1]तदवयवसंयोगविभागसद्भावेऽपि तेषु महत्त्वादकम्पनीयेषु बलवद्विधारकप्रयत्न-विधृतात्मसु[2] न [3]क्रियावत्त्वाभ्युपगमः । तस्मान्न तन्निबन्धनः ।

नभसस्त्वप्रत्यक्षत्वात् तद्वृत्त्योः संयोगविभागयोर्दुर्लभा प्रत्यक्षता ।

**तदवयवसंयोगविभागसद्भावेऽपि तेषु महत्त्वादकम्पनीयेषु बलवद्विधारकप्रयत्न-विधृतात्मसु न [4]क्रियावत्त्वाभ्युपगमः । तस्मान्न तन्निबन्धन इति ।**

अयमर्थः — यथा स्थाणोः श्येनो न देशो भवति, प्रसिद्ध्यभावात्, न तथा जलं मत्स्यानां न देशः, किन्तु देश एव, प्रसिद्धेः । तथाहि 'जले मत्स्याः' 'मत्स्यानां जलं देशः' इति प्रतियन्ति लौकिकाः । ततश्च [5]देशभूतजलावयवसंयोगवत्स्वपि मत्स्येषु महत्त्वात् कम्पयितुमयोग्येषु बलवतो जलौघादेर्विधारकेण प्रयत्नेन विधृतात्मसु उपष्टब्धशरीरेषु न क्रियावत्त्वावगतिरस्ति । तस्मान्नाधारदेशसंयोगविभागमात्रालम्बनश्चलतिप्रत्ययः ।

ननु पदार्थानामाकाशं देश इत्युक्तं अवकाशदानात्, तत्संयोगविभागाश्च स्थिरमूर्तिषु मत्स्येषु न सन्ति । अतो न तत्र क्रियावत्त्वावगमप्रसङ्ग इत्याशङ्क्याह—**नभसस्त्वप्रत्यक्षत्वात् तद्वृत्त्योः संयोगविभागयोः दुर्लभा प्रत्यक्षतेति ।**

अस्यायमर्थः — आकाशस्याप्रत्यक्षत्वात्तदाश्रितयोः संयोगविभागयोः प्रत्यक्षता नोपपद्यते । कथं पुनराकाशस्याप्रत्यक्षता? उच्यते — न तावच्चाक्षुषप्रत्यक्षगोचरत्वम् अरूपत्वात् । रूपवत्त्वे स्पर्शवत्त्वस्यापि प्रसङ्गात् । तस्य चाभावात् । अत एव न त्वगिन्द्रियग्राह्यत्वम् । न चेन्द्रियान्तरगोचरत्वं, प्रमाणाभावात् । न चेन्द्रियान्तरगोचरत्वम्,

---

1. तदवयवानां (क.) ; तदवयवानां च (ग, घ, ङ.)
2. नीयेषु प्रयत्नविधृता (क.)
3. क्रियावगमः (ग, घ, ङ.) ; नैष (ख, ग, घ, ङ.)
4. क्रियावत्त्वावगमः (छ.)
5. हेतुभूत (च.)

तत्संयोगविभागयोश्चाक्षुषत्वे उपयुज्यते । किं पुनराकाशे प्रमाणम्? अनुमानमिति केचित् । शब्दः कश्चिद्गुणविशेषो भवितुमर्हति, नियमेनैकेन्द्रियग्राह्यत्वात्, रूपादिवत् । यश्च तस्य [1] गुणी स आकाश इति ।

अपरे तु आकाशस्य मनोमात्रगोचरत्वं वर्णयन्ति । सर्वथापि न चाक्षुषप्रत्यक्षगोचरत्वम् ।

ननु चाक्षुषत्वमपि कैश्चिदाकाशस्येष्टम् । सत्यमिष्टं, न तु युक्तं प्रमाणाभावात्, पूर्वोक्तविरोधाच्च । यद्यपि तदयुक्तं तथापि अप्रत्यक्षपक्षमङ्गीकृत्यैतदाचार्येणोक्तमित्यनवद्यम् ।

नन्वाश्रयाग्राहकेणापि इन्द्रियेणाश्रितं किञ्चिद् गृह्यमाणं दृश्यते—यथा शब्दगन्धादि । (एवं) प्रत्यक्षानाश्रितयोरपि संयोगविभागयोः प्रत्यक्षता स्यादितिचेत्, नैतत् सारम् । तत्र हि विस्पष्टं शब्दादिविज्ञानस्य प्रत्यक्षत्वमिति गत्यन्तराभावात् अप्रत्यक्षाश्रितस्यापि प्रत्यक्षयोग्यता कल्प्यते । इह तु चलतिप्रत्ययस्याप्रत्यक्षता(क्षा)काशसंयोगविभागव्यतिरिक्तेति (क्त)विषयत्वेनापि गतिः संभवति । अथवा एतद्दोषपरिहारार्थं सविशेषणोऽत्र हेतुः प्रयुज्यते—संयोगविभागावप्रत्यक्षावेव, वायुवनस्पतिसंयोगादिवदिति । न चैवं सति अनैकान्तिकत्वं, संयोगविभागयोरप्रत्यक्षाश्रितयोः क्वचिदपि प्रत्यक्षानुपलब्धेरिति ।

---

1. गुणी आकाश इति (छ.)

**न च [1]वियद्विततालोकनिबन्धनः, सन्तमसे झटिति [2]विद्युति क्रियाप्रत्ययात् ।**

**तस्मादस्ति [3-4]धातूपादानतदाहितविशेषातिरिक्तात्मा[5] क्रियापदार्थो भावनापर्यायः [6]।**

नन्‍ु [7]मा भूतामाकाशसंयोगविभागौ चलतिप्रत्यक्षविषयौ । वियति विस्तीर्णे(र्णः) आलोकनिवह(हः)प्रभासमूह(हः)तदवयवसंयोगविभागविषयः [8]चलतिप्रत्ययो भविष्यतीत्याशङ्क्याह—**न च वियद्विततालोकनिबन्धनः, सन्तमसे झटिति विद्युति क्रियाप्रत्ययादिति ।**

अयमर्थः—तमसा व्याप्ते व्योमनि स्फुरन्त्यां विद्युति झटिति चलतीतिप्रत्ययः प्रादुर्भवति । न च तस्यालोकनिवहावयवसंयोगविभागालम्बनत्वं शक्यते निरूपयितुम्, अग्न्याद्यालोकस्य तदानीं तत्राभावात् । तदेतत् सन्तमसग्रहणेन दर्शितम् । न च विद्युदालोकनिवहसंयोगविभागालम्बनो विद्युच्चलतीति प्रत्ययः, [9]वैद्युतस्यालोकस्य चलत्याश्रयात् प्रथग्भूतस्य प्रसारितस्यास्यामवस्थायामभावात् । तदेतद् झटितिग्रहणेन दर्शितम् ।

इदानीं धात्वर्थाद् भावनाया भेदं [10]प्रतिपादयितुमुपसंहरति—**तस्मादस्ति धातूपादानतदाहितविशेषातिरिक्तात्मा क्रियापदार्थो भावनापर्याय इति ।**

---

1 विततालोकावयविनिवहावयविनिबन्धनत्वं (ग, घ, ङ.)
2. प्रतिपत्तिक्रिया ; विच्छित्तिक्रिया (ख.)
3. धातूरूपक्रियापदार्थो (क.)
4. उपात्त तदाहित (ग, घ, ङ.)
5. अतिरिच्यमानात्मा (ग, घ, ङ.)
6. भावनापरपर्यायः (ख.)
7. मा आकाश (छ.)
8. चलतिप्रत्ययविषयो (च.)
9. आलोकनिवहस्य (छ.)
10. प्रतिपादितं (छ.)

**नन्वेवं भावनातो [1]धात्वर्थनिष्पत्तिः, [2]ततः फलस्येति कथं तन्निष्पाद्यो धात्वर्थः तस्याः[3] करणं? [4]स्वर्गादि वातत्साध्यं कर्म?**

अयमर्थः — तस्मात्-उक्तहेतुतः धातूपादानात् धात्वर्थात्-तदाहितविशेषात्-तेन क्रियापदार्थेनाहितादुपजनिताद् गुणविशेषादतिरिच्यमानात्मा क्रियारूपः—पूर्वापरीभूतात्मा पदार्थो भावनाभिधानश्चलत्यादिप्रत्ययविषय आख्यातप्रत्ययस्य चाभिधेयो विद्यत इति। कथं [5]पुनररूपा क्रिया चक्षुर्गोचरा स्यात्? रूपिद्रव्याश्रितत्वादिति वदामः। तत्र पुनः पूर्ववादी चोदयति—**नन्वेवं भावनातो धात्वर्थनिष्पत्तिः, ततः फलस्येति कथं तन्निष्पाद्यो धात्वर्थस्तस्याः करणं, स्वर्गादि वातत्साध्यं कर्मेति।**

अयमभिप्रायः — उपवर्णितन्यायेन भावनानिष्पाद्ये धात्वर्थेऽभ्युपगम्यमाने तस्य भावनायां करणत्वं न संभवति, तन्निष्पाद्यत्वादेव। न हि येन यन्निष्पाद्यते तदेव तस्य साधनं भवितुं शक्नोति। न चैवं सति स्वर्गादेर्भावनाकर्मत्वमपि संभवति, भावनानिष्पाद्यधात्वर्थसाध्यत्वेन भावनासाध्यत्वाभावात्। अतो यागादेर्भावनाकरणत्वं स्वर्गादेश्च भावनाकर्मत्वमिष्टं न सिद्ध्यतीति तात्पर्यम्।

इदानीमक्षरानुलोम्यं प्रदर्श्यते — एवं — पूर्वोक्तेन प्रकारेण, भावनातो धात्वर्थस्य निष्पत्तिः, ततो — धात्वर्थात्स्वर्गादेः फलस्य निष्पत्तिरित्यतः तन्निष्पाद्यः — तया भावनया निष्पाद्यो धात्वर्थः तस्या — भावनायाः कथं करणं स्यात्? न कथंचिदपि स्यादिति भावनातो धात्वर्थनिष्पत्त्यङ्गीकरणात् प्रसक्तोऽयं दोषः। अतत्साध्यं — तया

---

1. धात्वर्थस्य (ख, ग, घ, ङ.)
2. ततश्च (ग, घ, ङ.)
3. तस्यां (ग, घ, ङ.)
4. स्वर्गादि वा तत्साध्यं (च, छ.); स्वर्गादि वा अश्रुतं (ख.); स्वर्गादिचान्यसाध्यं (ग, घ, ङ.)
5. पुनरनुरूपा (च.)

[1]तस्मात् स एव धात्वर्थस्तथा भावना अस्तु, स्वर्गं धात्वर्थश्चान्तरा[2] व्यापारान्तरानुपलब्धेरित्युक्तम् ।

उक्तोत्तरमेतत् । तथाहि—

फले न साक्षात् करणे कर्तुश्चेष्टा फलार्थिनः ।
करणत्वं प्रधानांशे [3]ताद्रूप्यं वा यतस्ततः ॥ ४५ ॥

भावनया यत्साध्यं न [4]सभवति स्वर्गादि धात्वर्थसाध्यत्वात् तस्या भावनायाः कथं तत् (कर्म) स्यात्, न कथंचिदपि स्यादिति भावनातो धात्वर्थनिष्पत्त्यङ्गीकरणात् प्रसक्तोऽयमनिष्टापत्तिदोषः ।

एवं पूर्ववादी भावनापक्षे दोषप्रसङ्गं दर्शयित्वा स्वपक्षमुपसंहरति—**तस्मात् स एव धात्वर्थस्तथा भावनास्तु स्वर्गं धात्वर्थं चान्तरा व्यापारान्तरानुपलब्धेरित्युक्तमिति** । तस्मात्— उक्तहेतुतः, स एव—फलसाधनत्वेनाभ्युपगतः धात्वर्थः तथा — फलभावनसामर्थ्यापेक्षया भावना भवतु, नार्थान्तरं । यदि धात्वर्थनिष्पादकव्यापारातिरेकेण धात्वर्थनिष्पाद्योऽन्यो व्यापारः फलधात्वर्थयोरन्तराले विद्येत तदा तस्मिन् व्यापारे स्वर्गधात्वर्थयोः कर्मकरणत्वे स्याताम् । न च सोऽस्तीत्युक्तं — 'न हि धात्वर्थकरण' इत्यादौ ।

इदानीं [5]सिद्धान्तवाद्याह — **उक्तोत्तरमेतदिति** । उक्तमस्य चोद्यस्योत्तरमस्माभिः "करणं खलु सर्वत्र कर्तृव्यापारगोचर" इति । अत्र हि भावनाविषयस्यापि

---

1. तस्माद्धात्वर्थ एव भावना अस्तु (ख, ग, घ, ङ.)
2. अन्तरेण (क, ख.)
   अनुपलम्भात् (ख, ग, घ, ङ.)
3. कर्तृत्वं वा यतस्ततः (ख.)
4. भवति (छ.)
5. सिद्धान्त्याह (च.)

सतो धात्वर्थस्य करणत्वं लोकप्रसिद्धम् परश्वादिकरणसाधर्म्यप्रदर्शनेन प्रतिपादितम् । कथम्?

[1] **अन्यार्थाप्तिविवक्षायामकर्मातिशयाद्विना ।**
**उद्देशादन्यवृत्त्यापि फलमेवेष्यतेतराम् ॥** इति ।

अत्र फलस्य कर्मत्वोपपत्तिः करणस्याकर्मतोपपत्तिश्चोक्ता । तस्मान्नेह किंचिद्वक्तव्यमस्ति । तथाप्यजानतो भवतः तदेव स्पष्टीक्रियते इत्यनेनाभिप्रायेणाह — **तथाहि—**

**फले न साक्षात् करणे कर्तुश्चेष्टा फलार्थिनः ।**
**करणत्वं प्रधानांशे ताद्रूप्यं वा यतस्ततः ॥**

अयमर्थः — सर्वत्रापि फलार्थिनः कर्तुर्न साक्षात् फले चेष्टा, किन्तु **करणे** । तथापि सा फलकर्मता न जहाति, फलाभिसन्धानेन निर्वर्त्यमानत्वात् । तदेतत् फलार्थिन इति विशेषणनिदर्शितम् ।

ननु यदि कर्तुश्चेष्टायां करणस्य विषयभावः, क्व तर्हि करणभावः तस्य? न ह्येकस्यामेव चेष्टायामुभयथा सम्बन्धो घटते इत्याशङ्कापाकरणायोक्तं — **करणत्वं प्रधानांश इति** । एतदुक्तं भवति — न भावनायां साक्षात् करणस्य करणत्वं, किं तु **प्रधानांशे**— फलांशे प्रधानभूतफलांशकरणत्वद्वारेण तद्वत्यां भावनायां करणत्वमुच्यते । साक्षादेव वा भावनायां करणत्वमित्येतत्प्रतिपादनायोक्तं—**ताद्रूप्यं वा यतस्तत इति** ।

**ततो**—धात्वर्थात्, **ताद्रूप्यं**—भावनारूपत्वं व्यापारस्येति । अतः करणत्वमुपपद्यत इति । एतदुक्तं भवति — भाव्यसम्बन्धिरूपं व्यापारस्य भावनात्वं नाम । तच्च रूपं धात्वर्थाद् भवति । अतः भावनारूपेण करणसाध्यं व्यापाररूपेण च तत्साध्यमित्यविरोधः[2] ।

---

1. अन्यार्थास्ति (च.)
2. इत्यप्यविरोधः (च.)

**नेमे [1] अन्यकर्मकरणत्वविलक्षणे फलधात्वर्थकर्मकरणत्वे [2]। [3] दर्शितं परशुना छिनत्तीत्यपि न [4] द्विधाभवने [5] कर्तृव्यापृतिः, [6] अपि तु करणे [7] साधननियोगादि-लक्षणत्वात्कर्तुः [8]**

अधुना श्लोकस्यार्थव्याचिख्यासयाह — **नेमे अन्यकर्मकरणत्वविलक्षणे फल-धात्वर्थकर्मकरणत्वे इति** ।

अयमर्थः — फलस्य स्वर्गादेर्यत्कर्मत्वं यच्च धात्वर्थस्य यागादेः करणत्वमिमे [9] नान्यकर्मकरणत्वविलक्षणे — यत् खल्वन्यत् कर्म लोकप्रसिद्धं द्वैधीभावादि, न तत्कर्मत्वाद्विलक्षणं स्वर्गादिकर्मत्वम्, यच्चान्यत् लोकप्रसिद्धं करणं परश्वादि, न तत्-करणत्वाद्विलक्षणं यागादेर्धात्वर्थस्य करणत्वं, किन्तु तादृशमेव। अतो न पर्यनुयोगयोग्य-मित्यभिप्रायः । कथं पुनः लोकप्रसिद्धकर्मकरणत्वसाम्यं फलधात्वर्थकर्मकरणत्वयोः इत्याकाङ्क्षायामाह— **दर्शितं परशुना छिनत्तीत्यपि न द्विधाभवने कर्तृव्यापृतिः, अपि तु करणे, साधननियोगादिलक्षणत्वात् कर्तुरिति** । उक्तमेतत् पुरस्तात् —

---

1. कर्मविलक्षणे (क.); कर्मकरणविलक्षणे (ख, ग, घ, ङ.)
2. विलक्षणे कर्मकरणत्वे (क.); फलधात्वर्थयोः कर्मकरणत्वे (ग, घ, ङ.)
3. दर्शितं हि छिनत्तीति (क.); दार्शितं छिनत्तीति (ख.)
4. न द्विधाभवन्नकर्तृ (क.); न हि द्विधाभावे कर्तृ (ग, घ, ङ.)
5. व्यावृत्तिः (क, ख, च, छ.)
6. किन्तु (क, ख.)
7. साधने (क, ख.)
8. वियोगादि (ग, घ, ङ.)
9. नान्यत् (च.)

[1] तत्रैव चैष व्यापारः तदभिसन्धानात्,[2] अनन्यप्रकारत्वात् ।

करणविषय एव साक्षात् कर्तृव्यापारः सर्वत्रेति 'करणं खलु सर्वत्र' इत्यादौ। तदेव पुनः स्पष्टीक्रियते। परशुना छिनत्तीत्यत्रापि हि न द्विधाभवनाख्ये फलेऽभ्यर्थ्यमानेऽपि साक्षात् कर्तृव्यापारः, अनुपपत्तेः। क्व तर्हि? करणे परश्वादौ। तद्वा कुत इत्याशङ्कयोक्तं— साधननियोगादिलक्षणत्वात् कर्तुरिति। साधनानां नियोगः (अ)प्रवृत्तानां प्रवर्तनं आदि-शब्दादनिवृत्तानां निवर्तनं च यतः कर्तुः लक्षणं अतस्तद्व्यापारस्य करणविषयता युक्ता।

नन्वेवं सति करणस्यैव परश्वादेः कर्मत्वं स्यात्, न फलस्य द्विधाभवनादे-रित्याशङ्कयाह— **तत्रैव चैष व्यापारः तदभिसन्धानादिति** ।

अयमर्थः — एषः — कर्तृव्यापारः, तत्रैव—फल एव, न करणमात्रपर्यवसायी। कुतः? तदभिसन्धानात्—फलाभिसन्धानात्। एतदुक्तं भवति — फलार्थिताप्रयुक्तः कर्तृव्यापारः साक्षात् करणविषयोऽपि न तन्मात्रे पर्यवस्यति, किन्तु तद्व्यवधानेन फलमपि व्याप्नोति। तदभिसन्धानात् फलाभिसन्धानाद्धि प्रवर्तमानः पुरुषः तन्निबन्धन-(तन्निर्वर्तन)समर्थे[3] कर्तृव्यापारे कर्तृत्वं अनुभवति। न चैकान्ततोऽन्यविषयस्य व्यापारस्या-न्यानिर्वर्तनसामर्थ्यम्। अतः करणव्यवधानेन फलमपि विषयीकरोति कर्तृव्यापार इति।

नन्वेवं तर्हि फलस्य कर्मत्वमेवौपचारिकं स्यात् करणव्यवधानादित्याशङ्कयाह— **अनन्यप्रकारत्वादिति** ।

---

1. तत्रैव व्यापारः (ग, घ, ङ, च, छ.)
2. तदभिसंज्ञानात् (क, ख.)
   प्रकारत्वाच्च (क, ख.)
3. समर्थे व्यापारे (छ.)

**इयांस्तु [1] विशेषः — [2] धात्वर्थस्योत्पादेन [3] विनियोगः, [3] परश्वादेस्तु [4] सिद्धस्योद्यमननिपातनादिना । [5] वृक्षादेस्तु कर्मत्वं द्विधाभवने कर्तृत्वात्तदर्थं [6] परशुनिपातनोद्यमनलक्षणम् ।**

नान्यः प्रकारः करणव्यवधाननिरपेक्षः कर्मसंबन्धेऽस्ति, किन्तु तत्सापेक्ष एव । अतो मुख्यस्यान्यस्य लोकप्रसिद्ध्यभावादिदमेव फलस्य मुख्यं कर्मत्वम् । तस्माल्लोकप्रसिद्धफल(कर्म)करणत्वाभ्यां फलधात्वर्थकर्मकरणत्वयोर्नास्ति विशेषः । किं कियानपि विशेषो नास्तीत्याशङ्क्याह — **इयांस्तु विशेषः — [7] धात्वर्थस्योत्पादेन विनियोगः, परश्वादेस्तु सिद्धस्योद्यमननिपातनादिनेति** ।

[8] इयान् विशेषः — परश्वादेः करणाद्धात्वर्थस्य करणस्य । परश्वादि स्वयं सिद्धस्वभावत्वात् स्वरूपेण न साध्यते किन्तु [9] उद्यमनादिव्यापाराविष्टतया । धात्वर्थस्तु स्वयमसिद्धस्वभावत्वात् स्वरूपेणैवोत्पाद्यते कार्योत्पादनाय फलार्थिभिः । कर्तृव्यापारविषयभूतस्तूभयत्रापि न विशिष्यते । भवतु कर्तृव्यापारविषयस्यापि परश्वादेः करणस्य करणत्वम्, वृक्षादेस्तु कर्मणः कथं कर्मत्वं किंलक्षणं, यत्र परश्वादेः करणत्वमित्यपेक्षायामाह — **वृक्षादेस्तु कर्मत्वं द्विधाभवने कर्तृत्वात् तदर्थं परशुनिपातनोद्यमनलक्षणं** इति । अस्ति हि वृक्षादेः द्विधाभवने कर्तृत्वम् । अतः छेदने कर्मता

---

1. भेदः (क, ख, ग, घ, ङ.)
2. उत्पादमा (क.); उत्पादनं (ग, घ, ङ.)
3. नियोगः (ग, घ, ङ.)
   परश्वादेश्च (क, ख.)
4. उद्यमनादि (क.); उद्यमनादिः (ख.); उद्यमनिपातनादिः (ग, घ, ङ.)
5. वृक्षादेश्च (क, ख, ग, घ, ङ.)
6. परशूद्यमननिपतनलक्षणं (क, ख.); परशुतिष्ठितं? निपातनोद्यमनादिलक्षणं (ग, घ, ङ.)
7. उत्पादनवियोगः (छ.)
8. एतावान्विशेषः (छ.)
9. व्यापारविशिष्टतया (च.)

भवनकर्तुर्हि भावना । ततश्च भवनकर्तृवृक्षाद्यर्थपरशुनिपातोद्यमनलक्षणं तस्य वृक्षादेः कर्मत्वमित्येतद् तदर्थेत्यादिनोक्तं कर्मलक्षणम् ।

ननु ईप्सिततमत्वं कर्मलक्षणम्, किमिदमन्यदुच्यते? नेदमन्यत्, किन्तु तदेव । तथाहि—यद् वृक्षाद्यर्थतया परश्वादेः करणस्य प्रवर्तनं तदेव वृक्षादेरीप्सिततमत्वम् । ननु वृक्षसमवायीप्सिततमत्वं अन्यच्चान्यसमवायि । कथमनयोरेकत्वम्? उच्यते—एकस्यैवोभयत्र व्यासज्य वृत्त्युपपत्तेः उभयाश्रितव्यवहारसंभवाददोषः सादृश्यादिवत् । तथाहि —(यथाहि) सादृश्यं एकमेव गोगवययोर्वर्तते, एक एव भेदो घटपटयोः, तथेहापि स्यादिति ।

अथवा कर्मत्वरूपोपाधिभूतार्थान्तरोक्त्या तदेव [1] विवक्ष्यतामिति । तथापी(हि-ई)प्सिततमत्वमतिशयेनेप्साविषयत्वम् । तच्च [2] तादर्थ्येनान्यस्यापि क्रिययाप्तुमिष्टत्वे सति भवति, तदपेक्षयेप्सातिशयोपपत्तेः । अत. यत्स्वयमेव अनन्यार्थया क्रिययाप्तुमिष्यते [यच्चान्यत्] तत् कर्मेत्युक्तं भवति ।

नन्वेवं सति सुखप्राप्तिदुःखपरिहारव्यतिरिक्तस्य न कस्यचिदपि कर्मता स्यात्, तद्व्यतिरिक्तस्योक्तलक्षणविरहात् । न हि वृक्षादिरपि छेदनादिकर्मत्वाभिमतोऽनन्यार्थतयाप्तुमिष्यते, किन्तु अन्यार्थतया । सत्यं, तथापि न तस्य कर्मत्वव्याघातः, क्रियान्तरापेक्षत्वादन्यार्थतायाः । तथाहि — योऽयं परशूद्यमनादिलक्षणः कर्तृव्यापारः न तेनैव वृक्षव्यतिरिक्तं प्रयोजन प्रेप्स्यते, किन्तु तत्कर्मीभूतवृक्षसाध्यक्रियान्तरद्वारेण । वृक्षस्तु तेनैव, व्यापारान्तरानुपलब्धेः । तस्मादेकव्यापारविषयीभूताना धात्वर्थाना यस्यैकस्य तद्व्यापारविषयीभूतेतरपदार्थप्रेप्सितत्वानपेक्षया प्रेप्सितत्वं यत्प्रेप्सितत्वोपाधिकं चान्यत्र तत्रेप्सितत्वातिशययोगात् कर्मलक्षणविरहाभावाद्युक्तं वृक्षादेः कर्मत्वमित्यनवद्यम् ।

---

1 विवक्ष्यत इति गृह्यताम् (छ)
2. तादात्म्येन (च)

**द्विधाभवनं [1] प्रति करणत्वं च परशोः छिनत्तौ [2] प्रधानापेक्षम्, तादूप्यस्य वा तदधीनत्वात् ।**

इदानीं 'करणत्वं प्रधानांशे' इति श्लोकोत्तरार्धसूचितमर्थमाविष्कर्तुमाह — **द्विधाभवनं प्रति करणत्वं च परशोः छिनत्तौ प्रधानापेक्षं तादूप्यस्य वा तदधीनत्वादिति** । अनेन ग्रन्थेन परशोः छेदने तदुद्यमननिपातनलक्षणे करणत्वानुपपत्त्याशङ्का अपनीयते । का पुनस्तदाशङ्का ? उच्यते — द्विधाभवनं हि परशुव्यापाराधीनात्मलाभम् न छेदनव्यापारः परशूद्यमनादिलक्षणः तदधीनात्मलाभः ; तत्र कथं परशोः करणत्वमिति । इयमाशङ्कापनीयते । कथम् ? प्रधानभूते फलांशे द्विधाभवनलक्षणे परशोः करणत्वम्, तद्द्वारेण चांशिनि व्यापारे करणत्वोक्तिः, न साक्षात्करणत्वेनेति ।

अत्रैषाक्षरयोजना — द्विधाभवने यत्करणत्वं परशोस्तच्छिनत्तौ प्रधानापेक्षमिति । 'तादूप्यं वा यतस्ततः' इति [3] श्लोकैकदेशव्याख्यानायोक्तम् — 'तादूप्यस्य वा तदधीनत्वात्' इति । तादूप्यं भावनारूपत्वं व्यापारस्य तदधीनं परशुव्यापाराधीनम् ।

ननु द्विधाभवनमेव परशुव्यापाराधीनम्, न भावनात्वमपि । नैवं, द्वयस्यापि तदधीनत्वात् । न हि केवलं द्विधाभवनमेव परशुव्यापाराधीनम्, किन्तु उद्यमननिपातनरूपस्य व्यापारस्य छेदनभावनारूपत्वमपि । न चान्यथासिद्धिराशङ्कनीया, परशुव्यापारात् द्विधाभवनम् द्विधाभवनाद् व्यापा(रे)छेदनभावनारूपत्वमिति यतो न भाव्यभावनोत्तरकालं भावनारूपः ...... किन्तु तत्कालमेव ।

---

1. करणत्वं छिनत्तौ (क, ख) ; करणत्वं तच्च परशोः करणत्वं छिनत्तौ–(ग, घ, ङ)
2. प्रधानांशसापेक्षं, तदनपेक्षायां च करणत्वात् तादूप्यस्य वा (क) ; प्रधानांशसापेक्षं, तदनपेक्षायां च कर्तृत्वात् तादूप्यस्य वा (ख.)
3. श्लोकस्य व्या (च.)

**नह्युद्यमन [1]निपातनमात्रमसम्भवद्द्विधाभवनं छिनत्तीति निरूप्यते ।**

**[2]तस्मादिहापि धात्वर्थस्योत्पादकोऽनुग्राहको वा कर्तृव्यापारः[3] समुद्दिष्टफलभवनतया प्रतिलब्धभावनाव्यपदेशो [4]धात्वर्थोपनिबद्धप्रधानांश [5]ताद्रूप्यफलकर्मको धात्वर्थकरणकश्चेति न दोषः ।**

अथवा विपरीतेनान्यथासिद्धिः । परशुव्यापारो ह्युद्यमनादिकर्तृव्यापारैकतामुपगच्छंस्तमेव यावत्फलोदयं दीर्घ इत्येतस्य (दीर्घयति-एतस्य) फलभावनानुकूलस्वभावापादनेन भावनारूपतामापादयति। ततश्च लब्धभावनारूपात् व्यापारात् द्विधाभवनं वृक्षस्य सम्पद्यते । अतो युक्तमेवोक्तम् — ताद्रूप्यस्य वा तदधीनत्वादिति । कथं पुनरिदमवगम्यते परशोः छिनत्तौ प्रधानापेक्षं करणत्वं ताद्रूप्यस्य वा तदधीनत्वमिति? अत आह — **नह्युद्यमननिपातनमात्रमसंभवद्द्विधाभवनं छिनत्तीति निरूप्यते इति ।**

अयमर्थः —यत्र द्विधाभवनस्य फलस्यासंभवो निश्चितो भवति कठिनतरशिलातलादौ, न तत्र परशूद्यमननिपातनलक्षणो व्यापारः परशुना छिनत्तीत्यने(न) निरूप्यते, किन्तु उद्यमननिपातनमात्ररूपेण 'उद्यच्छति परशुं निपातयति च' इति । तत्र च परशोः कर्मत्वमेव । अतो यत्रोद्यमनादिव्यापारः छेदरूप (पाप) आपन्नो भवति तत्र परशोः करणत्वं, तदपेक्षितद्विधाभवनसंपादनात् तद्रूपेण[6] ताद्रूप्यस्योपपादनाद्वा । एवं लोकप्रसिद्धस्य कर्मणः करणस्य च स्वरूपमुपदर्श्याधुना तत्साम्यं फलधात्वर्थयोर्निगमयति— **तस्मादिहापि धात्वर्थस्योत्पादकोऽनुग्राहको वा कर्तृव्यापारः समुद्दिष्टफलभवनतया प्रतिलब्धभावनाव्यपदेशो धात्वर्थोपनिबद्धप्रधानांशताद्रूप्यफलकर्मको धात्वर्थकरणकश्चेति न दोष इति ।**

1. असंभवनं (ख.)
2. अस्मात् (ख.); तस्मादपि (घ.)
3. व्यापारसमुद्दिष्ट (क, ख.)
4. निबन्धन (क, ख.)
5. तद्रूप (क, ख, च, छ.)
6. ताद्रूप्य संपादनाद्वा (च.)

**न हि द्विधाभवति (भावयति) परशुनेति परशुं [1]द्विधाभवनं चान्तरेण कर्तृव्यापार [2]एकोऽपरसाध्योऽपरसाधन[3] उपलभ्यते । न च करणत्वं विरुद्धम्, प्रधानांशनिष्पत्तेस्तदधीनत्वात् । तथेहापि**

इहापि—यजेत स्वर्गकाम इत्यादौ। धात्वर्थस्य—यागादेः संकल्पात्मकस्योत्पादकोऽयं प्रयत्नरूपः कर्तृव्यापारोऽनुग्राहको वा दृष्टेतिकर्तव्यतारूपानुष्ठानरूपः[4] स्वर्गादिफलकर्मको धात्वर्थकरणकश्चेति न विरुध्यत इति । व्यापारस्यैव विशेषणं समुद्दिष्टफलभवनतया प्रतिलब्धभावनाव्यपदेश इति । समुद्दिष्टमभिसंहितं फलभवनं यस्मिन् सोऽयं समुद्दिष्टफलभवनो व्यापारस्तस्य भावः समुद्दिष्टफलभवनता तया हेतुभूतया प्रतिलब्ध-भावनाव्यपदेशः—प्रतिलब्धः प्राप्तः आसादितः भावनाव्यपदेशः—भावनेतिव्यवहारः येनासौ प्रतिलब्धभावनाव्यपदेशो व्यापार. । उत्पाद्यानुग्राह्यधात्वर्थनिबन्धनः प्रधानांशः फललक्षणस्ताद्रूप्यं भावनारूपत्वं वा यस्य स धात्वर्थनिबद्धप्रधानांशताद्रूप्यः । स एव व्यापारो धात्वर्थविषयोऽपि फलकर्मको युज्यते फलाभिसन्धानप्रवर्तितत्वात्, धात्वर्थ-करणकश्च तदधीनप्रधानांशत्वात्तदधीनांशभावनारूपत्वाद्वा । अतो धात्वर्थफलयोरन्तराले व्यापारान्तरानुपलम्भो न दोष इत्यर्थः ।

व्यापारान्तरानुपलम्भस्यादोषत्वख्यापनायाह—**न हि द्विधाभवति (भावयति) परशुनेति परशुं द्विधाभवनं चान्तरेण कर्तृव्यापार एकोऽपरसाध्योऽपरसाधन उपलभ्यते । न च करणत्वं विरुद्धं प्रधानांशनिष्पत्तेस्तदधीनत्वादिति** ।

अयमर्थ.—फलकरणान्तराले अन्यस्य कर्तृव्यापारस्याभावो लोकेऽप्यविशिष्टः । तत् कथम्? न हि परशुना द्विधाभावयतीत्यत्रापि परशुद्विधाभवनयोर्मध्ये कर्तृव्यापार एकः—प्राचीनपरशुविषयोद्यमननिपातनलक्षणः (णकर्तृ)कर्तृव्यापारादन्योऽपरेण परशुना साध्योऽपरस्य द्विधाभवनस्य साधनभूत उपलभ्यते, किन्तु एक एव । तथापि परशोः करणत्वं न विरुध्यते फलांशनिष्पत्तेः तदधीनत्वात् । एतत् प्रकृते योजयति—**तथेहापीति** ।

1 भावनं (क॰)
2 एकस्य साध्यो (ङ)
3. साधनभूत (क, ख)
4. रूपानुष्ठानं (च॰)

[1-2] **फलभूतक्रियांशापेक्षत्वात्कारकविभक्तिविभागव्यवस्थायाः ।**

**तथाहि —**

**[3] प्रधानांशमुपादाय साधनान्येकवाक्यताम् ।**
**व्रजन्ति नान्यव्यापारो रूपतो ह्यन्यसाधनः ॥ ४६ ॥**

इहापि [4] धात्वर्थस्य व्यापारान्तराभावेऽपि [5] प्रधानांशनिष्पादनेन करणत्वमविरुद्ध-मित्यर्थः । अवश्यं च प्रधानांशापेक्षमेव करणत्वमभ्युपेयमितरकारकत्वस्यापि तथैवाभ्युपगन्तव्यत्वादित्याह — **फलभूतक्रियांशापेक्षत्वात् कारकविभक्ति-विभागव्यवस्थाया इति** ।

अयमर्थः — न क्रियास्वरूपापेक्षा कारकविभागस्य कर्तृकरणादिरूपस्य तद्विभक्तीनां तृतीयादीनां व्यवस्था । अपि तु क्रियाया प्रधानभूतो योंऽशस्तदुपकारकत्व प्रकारभेदापेक्षया । अतो न केवलं करणत्वमेव [6] प्रधानांशापेक्षम्, किन्तु अन्यदपि सर्वं कारकत्व तथैवेत्यभिप्रायः । एतदुपपादयति —

**तथाहि —**

**प्रधानांशमुपादाय साधनान्येकवाक्यताम् ।**
**व्रजन्ति(नान्य)व्यापारो रूपतो ह्यन्यसाधनः ॥** इति ।

---

1. फलभूते (ग, घ, ङ.)
2. क्रियापेक्षत्वात् (क.) ; क्रियापेक्षित्वात् (ख.)
3. मुपाश्रित्य (क, ख.)
4. धात्वर्थव्यापारा (च )
5 प्रधाननिष्पादनेन (च.)
6. प्रधानापेक्षं (च )

[1]तस्मादनुपालम्भोऽयं व्यापारानुपलम्भ[2] इति। यत्त्वात्मकर्तृकेषु [3]यजत्यादिष्वसंभव इति, तत्र केचित् —

भाष्ये यतेतेति गिरा प्रयत्नं प्रतिपेदिरे।
अचेतने प्रयोगस्य प्राचुर्यान्नोपचारधीः॥ ४७॥

अयमभिसन्धिः — एकस्मिन् व्यापारेऽनेकानि साधनानि प्रधानांशमपेक्ष्यान्वयं प्रतिपद्यन्ते, न व्यापारस्वरूपमपेक्ष्य, यतोऽन्यसाधनो व्यापारः स्वरूपतोऽन्यसाधनसाध्यो न भवति। एतदुक्तं भवति — व्यापाररूपेण व्यापारस्य स्वाश्रयव्यतिरिक्तसाधनापेक्षा न भवति स्वाश्रयमात्रेणैवात्मलाभात्। अतस्तद्रूपापेक्षया न साधनानामेकवाक्यभावः। [4]यस्तु तस्य भावनात्मतामापन्नस्य फलांशस्तत्साधनांशप्रकारभेदापेक्षया कारकाणि यथा-योगमन्वयं प्रतिपद्यन्ते फलांशतयैव च भावनयेतरांशापेक्षणात्। उपसंहरति— **तस्मादनुपालम्भोऽयं व्यापारानुपलम्भ इतीति।**

तस्मादिदं दूषणं न भवति — यदुक्तं फलधात्वर्थयोर्मध्ये व्यापारान्तरं न दृश्यते इति, तदभावेऽप्यभिमतवस्तुसिद्धेः। अतः स्थितमेतद् गुणविशेषधात्वर्थातिरिक्तो व्यापारः करोत्यर्थः इति।

यत्पुनरुक्तं व्यापारस्वरूपविचारावसरे परिस्पन्दव्यापारभावनापक्षे दूषणम्, तन्निराकरणायानुभाषते — **यत्त्वात्मकर्तृकेषु यजत्यादिष्वसंभव** इति। यदा परिस्पन्दः करोत्यर्थः तदा तस्यात्मकर्तृकेषु यजति जानातीत्यादिष्वसंभव इति।

एवमनुभाष्य परमतमवलम्ब्य परिहारमाह — **तत्र केचित्—**

**भाष्ये यतेतेति गिरा प्रयत्नं प्रतिपेदिरे।**
**अचेतने प्रयोगस्य प्राचुर्यान्नोपचारधीः॥**

---

1. तस्मादुपालम्भो (च, छ.)
2. व्यापारान्तरानुपलंभादिति (क, ख, ग, घ, ङ.)
3. यजत इत्यादिषु (क, ख, ग, घ, ङ.)
4. यत्तु (च.)

'तथा यतेत [1]यथा यत्किञ्चिद्भवतीति[2] फलभा(भ)वनानुकूलः प्रयत्न एवाख्यातार्थो दर्शितः । [3]अचेतने त्वाख्यातप्रयोग उपचारात् । [4]प्रयोगप्राचुर्यान्नौपचारिकः (कप्र) प्रत्ययः । [5]इदन्तु समाधानं [6]सिद्धे तद्भावे स्यात् । न च प्रत्यये समाने हेत्वन्तरे [7]चासति तत्प्रसिद्धिरस्ति, [8] विपर्ययावगमस्याशक्यवारणत्वात् ।

'तथा यतेत यथायत्किञ्चिद्भवति' इति आख्यातस्य भावनार्थताव्याख्यानपरे भाष्यवाक्ये यतेतेति प्रयत्नार्थाभिधानात् प्रयत्नमेव भावना केचिदङ्गीकृतवन्तः । कथं तर्हि तस्याचेतने प्रयोग ? उपचारात् । कथं तर्ह्युपचारबुद्ध्यभावः ? प्राचुर्यात् । प्रयोगप्राचुर्याद्धि औपचारिकोऽपि शब्दो मुख्यवदेवास्खलिता स्मृतिं जनयतीति । एतद् व्याचष्टे—**तथा यतेत यथा यत्किञ्चिद् भवतीति फलभा(भ)वनानुकूलः प्रयत्न एवाख्यातार्थो दर्शितः । अचेतने त्वाख्यातप्रयोग उपचारात्, प्रयोगप्राचुर्यान्नौपचारिकः (कप्र) प्रत्यय** इति ।

अस्यायमर्थः—प्रयत्न एव भाव्यभवनानुकूलतया भावनारूपता प्रतिपन्न आख्यातार्थो दर्शितो भाष्यकारेण 'तथा यतेत यथा यत्किञ्चिद् भवति' इति ब्रुवाणेन । ननु आत्मकर्तृकप्रयत्नाभावेऽपि अचेतने आख्यातप्रयोगो दृष्टो रथो गच्छतीत्यादावित्युक्तम् इत्याशङ्क्योक्तम्—अचेतने त्वाख्यातप्रयोग इत्यादि । नात्र तिरोहितं किञ्चिदस्ति ।

एवं पराभिमतं समाधानमनुभाष्येदानीं एतन्निराकरणायाह—**इदं तु समाधानं सिद्धे तद्भावे स्यात् । न च प्रत्यये समाने हेत्वन्तरे चासति तत्प्रसिद्धिरस्ति, विपर्ययावगमस्याशक्यवारणत्वादिति** ।

1 यथा किञ्चिद्भवतीति (ग, घ, ङ.)
2 भवतीति भवनानु (ख.)
3 आख्यात उपचारात्प्रयोग । प्राचुर्याच्च (क)
4 प्राचुर्यात्तु (ग, घ, ङ.)
5. इदञ्च (क)
6 प्रसिद्धे (ख, ग, घ, ङ.)
7 वासति (क, ख.)
8. रित्यस्ति (क, ख.)

**उदासीनत्वविच्छेदसामान्यात्मा ततो मतः ।**
**[1]करोत्यर्थो [2]द्वयोश्चेह तद्रूपप्रत्ययोद्भवः ॥ ४८ ॥**

अयमाशय.—यद्याख्यातस्य प्रयत्नमात्रवचनत्वं निश्चितं स्यात्तदा तदभावे प्रयोग औपचारिक इति कल्पना स्यात् । औपचारिकत्वनिश्चयपूर्विका च प्रयोग-प्राचुर्यादुपचारबुद्ध्यभाव इति कल्पना । न चैतद् द्वयमपि सिद्धम् । कथं? न तावत् आख्यातस्य प्रयत्न एवार्थो न परिस्पन्दो भवतीति शक्यते नियन्तुम्, चेतनव्यापार इवाचेतनव्यापारेऽपि प्रयोगात् । नह्युभयत्रापि प्रयोगाविशेषे एक एवार्थो ग्रहणमर्हति । अत एवाचेतने प्रयोगस्यौपचारिकत्व-मसिद्धं भवति । ततश्च ' प्राचुर्यात् नोपचारधीः ' इत्यनुपपन्नम् इति ।

अत्राक्षरयोजना— प्राचुर्यान्नोपचारधीरिति यदिदं समाधानं—परिहारः स सिद्धे (तद्भावे—) सति स(त)द्भावनिश्चये संभवति तस्यौपचारिकस्य प्रयोग(स्य भावे अचे) स्तद्भावो चेतनविषयस्य प्रयोगस्यौपचारिकत्वे सिद्ध एवेदं उपपद्यते नासिद्धे । न च तस्य प्रसिद्धिरस्तीति व्यवहितेन संबन्धः । तत्र हेत्वपेक्षायामुक्तम् 'प्रत्यये' इत्यादि । प्रत्यये—विज्ञाने समाने सति हेत्वन्तरे चौपचारिकत्वप्रतिपत्तिहेतावसत्यविद्यमान इति ।

विपर्ययावगमस्याशक्यवारणत्वादिति । अयमर्थः—विपर्ययस्यावगमो विपर्यया-वगमः । विपर्ययो वैपरीत्यं तदवगमस्य वारण न शक्यमिति, यतो न प्रसिद्धिरस्ति । एतदुक्तं भवति—यदि प्रत्यये समाने हेत्वन्तरे चासत्यपि प्रयत्न एवाख्यातस्य मुख्योऽर्थः, परिस्पन्दे तूपचारात् प्रयोग इति स्वेच्छामात्रेण परिकल्प्यते, तदा परिस्पन्द एव मुख्योऽर्थः [यत्र] रथो गच्छतीत्यादि प्रयोगदर्शनात्, आत्मकर्तृके तु प्रयत्नाख्ये व्यापारे यजते जानातीत्यादिप्रयोग उपचारादिति कस्मान्नेष्यते इति वदन् न दण्डैः पराणुद्यत इति । तस्मादसमञ्जसं समाधानमिति ।

प्रयत्नपरिस्पन्दसाधारण्येन भावनारूपं निरूपयितुमाह—

**उदासीनत्वविच्छेदसामान्यात्मा ततो मतः ।**
**करोत्यर्थो द्वयोश्चेह तद्रूपप्रत्ययोद्भवः ॥**

---

1. करोत्यर्थद्वये (घ), करोत्यर्थान्वये (ख); करोत्यर्थो द्वये (ग, घ.)

[1]उदासीनत्वविच्छेदो हि करोत्यर्थः, उदासीने [2]क्रियाज्ञानाभावात् ।

अयमर्थः — यदुभयोः प्रयत्नपरिस्पन्दयोरनुवर्तमानं रूपम् उदासीनत्वविच्छेदसामान्याकारबुद्धिसंवेद्यं तत्स्वभावः करोत्यर्थः इत्युभयत्रापि आख्यातप्रयोगोपपत्तिरिति । इदानीं अक्षरयोजना — तत इत्यत्र यत इत्यध्याहर्तव्यम् । यतः प्रयत्नमात्रस्य करोत्यर्थत्वे पूर्वोक्तो दोषो दुर्वारः ततस्तन्मात्रातिरिक्त उदासीनत्वविच्छेदसामान्यात्मा करोतेरर्थः । उदासीनत्वं — निर्व्यापारत्वं तस्य विच्छेदः, सामान्यं — साधारणं प्रयत्नपरिस्पन्दयोरुदासीनत्वविच्छेदसामान्यम्, तदेवात्मा स्वरूपं यस्य सोऽयं उदासीनत्वविच्छेदसामान्यात्मा करोत्यर्थोऽभिमतः । इह द्वये प्रयत्नपरिस्पन्दात्मके तद्रूपप्रत्ययोद्भवः उदासीनत्वविच्छेदरूपस्य प्रत्ययस्योद्भवः उदयोऽस्ति । अतस्तद्रूपप्रत्ययोद्भवस्योभयत्रापि भावात् तद्रूपोऽर्थोऽनुवर्तमानो दृश्यते । ततश्च स एव करोत्यर्थो भावना आख्याताभिधेय इति ।

ननु किमिदमुदासीनत्वं नाम? व्यापाराभाव इति चेन्न; व्यापारस्यैव जिज्ञासनात् । इह हि व्यापारस्यैव स्वरूपं मृग्यते । तत्र कथं तत्सिद्धवत्कारेण तल्लक्षणोक्तिः संभवति । कश्चायमुदासीनत्वस्य विच्छेदो नाम? तस्याभाव इति चेत् — कथमभावस्याभावः? कथं वा अभावरूपस्य करोत्यर्थता? उच्यते — उदासीनत्वशब्देन निर्व्यापारत्वमेवोच्यते । तस्य च व्यापाराभावरूपस्य विच्छेदो व्यापाराभाव (रभाव) एव । नह्यभावस्य विच्छेदो भावादन्यः सर्वत्रापि समस्ति । तस्मान्न करोत्यर्थस्याभावताप्रसङ्गः ।

यदुक्तमसिद्धे व्यापारे लिलक्षयिषिते तदवच्छिन्नेनार्थेन तल्लक्षणमयुक्तमिति; तदपि न, देवदत्तादिपदार्थाश्रितपूर्वापरीभूतस्वभावव्यापारप्रतिपत्त्युपलक्षणार्थत्वादुदासीनत्वविच्छेदवाचोयुक्तेः । तथाहि— यः सिद्धरूपपदार्थस्य पूर्वापरीभूतात्मावस्थाविशेषः सिद्धपदार्थविलक्षणाकारव्यापारप्रत्ययः (य) संवेदनीयः स करोत्यर्थ इति व्यापारबुद्धिरेव यथोक्तलक्षणा व्यापारलक्षणत्वेनोदासीनत्वविच्छेदवाचा विवक्ष्यते इत्यनवद्यम् । इदानीं श्लोकं विवृणोति — **उदासीनत्वविच्छेदो हि करोत्यर्थः, उदासीने क्रियाज्ञानाभवादिति** ।

1. औदासीन्य (ग, घ, ङ.)
2. क्रियात्माभावात् (क, ख.)

**[1]उदासीनताप्रच्युतिधियश्च द्वैधम्, आत्मनि प्रयत्नात्, [2] अन्यत्र परिस्पन्दात्।**

**[3] तथाहि —**

**[4] प्रयत्नवन्तमात्मानमनुदासीनं कुर्वाणं व्यापारवन्तमवैति, परिस्पन्दमानं [4] चान्यत्। अतः [5] प्रयत्नपरिस्पन्दयोरौदसीन्यविच्छेदसामान्ययोस्तदाभासधी [6–7] विषयत्वेन क्रियापदार्थत्वान्नात्मकर्तृकेषु तदभाव इति।**

अयमाशयः — उदासीने स्तिमिते स्वरूपमात्रेणावस्थिते क्रियाप्रतीतिर्नास्ति। अनुदासीने च अस्ति। ततोऽन्वयव्यतिरेकाभ्यामुदासीनत्वविच्छेदः क्रियाज्ञानस्य विषय इति स एव करोत्यर्थः। औदासीन्यस्य प्रच्युतिः (तिप्र) प्रतिपत्तिश्च प्रकारद्वयेन भवति आत्मानात्मनोः। आत्मनि प्रयत्नवति परिस्पन्दशून्ये प्रयत्नाद्भवति। अनात्मनि तु प्रयत्नशून्ये परिस्पन्दवति परिस्पन्दादेव। तदेतदाह -- **उदासीनताप्रच्युतिधियश्च द्वैधमात्मनि प्रयत्नादन्यत्र परिस्पन्दादिति।** एतदुपपादयति — **तथाहि — प्रयत्नवन्तमात्मानमनुदासीनं कुर्वाणं व्यापारवन्तमवैति परिस्पन्दमानश्चान्यदिति।**

अयमर्थः — सर्वोऽयं लोको व्यापारं कुर्वाणमात्मानं प्रयत्नवन्तमनुदासीनमवैति। प्रयत्नवत्त्वादनुदासीनं व्यापारवन्तमवैतीति। आत्मनोऽन्यच्छरीरादिकं परिस्पन्दमानमनुदासीनमवैतीति सम्बन्धः, परिस्पन्दमानत्वादचेतने शरीरादावित्यर्थः। भवतू-[8]दासीनत्वविच्छेदबुद्धिविषयत्वमुभयोरपि प्रयत्नपरिस्पन्दयोः, किमतो भवतीत्यत आह — **अतः प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्ययोस्तदाभासधीविषयत्वेन क्रियापदार्थत्वान्नात्मकर्तृकेषु तदभाव इति।**

---

1. उदासीना प्रच्युतिश्च द्वेधा (क, ख.): औदासीन्यप्रच्युतेश्च द्वैधं (ग, घ, ङ.)
2. अन्यत्र रथादौ (ग, घ.)
3. तथा प्रयत्न (क, ख.)
4. कथं यतमानमात्मानं (ग, घ, ङ.)
   चान्यं (क, ख, ग, घ.)
5. औदासीन्यप्रच्युतिसामान्य (क, ख.); औदासीन्यविच्छेदसामान्यांश (ग, घ, ङ.)
6. तदवभास (ग, घ, ङ.)
7. विषयत्वेनाक्रियापदत्वं नानात्म (ख.)
8. उदासीनत्वबुद्धिविच्छेदविषयत्वं (छ.)

**तदुक्तम् — 'न परिस्पन्द एवैकः क्रिया नः कणभोजिवत्' इति । अथापि [1]परिस्पन्देन [2]प्रयोजनम्, असौ —**

**मनोभूतपरिस्पन्द आत्मनस्तत्प्रयत्नजः ।**
**विक्लित्त्यादिर्यथा तस्मिन्साधनोपनिपाततः ॥ ४९ ॥**

अयमर्थः — द्वयोरपि प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यरूपता कुत इत्यपेक्षायामुक्त — तदाभासयोः[3] क्रियापदार्थत्वादात्मकर्तृकेषु जानातीत्यादिषु न तस्याः क्रियाया अभावप्रसङ्ग । प्रयत्नपरिस्पन्दयोरौदासीन्यविच्छेदसामान्यरूपता कुत इत्यपेक्षायामुक्तं — तदाभास(धी)विषयत्वेनेति । उदासीनत्वविच्छेद-सामान्याकारबुद्धिस्तदाभासधीः तस्य (स्या) विषयत्वेन हेतुना तद्रूपत्वम् ततश्चोभयोरपि प्रयत्नपरिस्पन्दयो. क्रिया (त्व) विद्यते एवेत्यर्थः । उक्तं च परिस्पन्दव्यतिरेकेण प्रयत्नस्यापि क्रियापदार्थत्वं भट्टाचार्यैः इत्याह — **तदुक्तं — "न परिस्पन्द एवैकः क्रिया नः कणभोजिवद्" इति ।** उत्क्षेपणादिपञ्चप्रकारभेदभिन्नः परिस्पन्द एवैकः क्रियापदार्थ. न प्रयत्न इति [4]कण-भुजो मतम् । न तथास्माकम् प्रयत्नस्यापि परिस्पन्दवत् क्रियापदार्थत्वाभ्युपगमादित्यर्थः ।

यदि मन्येत—यथा परिस्पन्दे स्फुटतरा क्रियाप्रसिद्धिर्लोके न तया प्रयत्ने । अतः आत्मकर्तृकेषु परिस्पन्देन प्रयोजनं तस्यैव क्रियात्वव्यवहारसंभवादिति, तर्ह्यसावपि परिस्पन्द आत्मन. कथंचित् संभाव्यत इत्याह — **अथापि परिस्पन्देन प्रयोजनम्, असौ —**

**मनोभूतपरिस्पन्द आत्मनस्तत्प्रयत्नजः ।**
**विक्लित्त्यादिर्यथा तस्मिन्साधनोपनिपाततः ॥ इति ।**

अथापीति शङ्कानुभाषणम् । तत्परिहारश्लोको मनोभूतेत्यादि । तत्र श्लोकादधस्तान्निर्वाहकोऽसावित्यसौ शब्द. श्लोकोपनिविष्टपदैकवाक्यभावेन योजनीयः असौ परिस्पन्द आत्मनोऽप्यस्तीति ।

---

1. स्पन्देनात्मन प्रयोजनं (ख.); स्पन्देन व प्रयोजनं (ग, घ, ङ.)
2. प्रयोजनं आत्मप्रयत्नजं (क.)
3. औदासीन्यविच्छेदसामान्यरूपयोः (छ.)
4. कणभोजिमतं (च.)

[1] **आत्ममनस्संयोगविशेषाद्विज्ञानसङ्कल्पाद्युत्पत्तिः । तन्निबन्धनमात्मसमवेतादृष्टप्रयत्नहेतु[2] मनसि कर्म [3] परिस्पन्दरूपमुपेयते । आत्मप्रयत्नापेक्षश्च भूतेषु [4] द्रव्योपादानादिलक्षणः परिस्पन्दः । [5] उभयोऽप्ययमात्मनस्तदधीनत्वात्,**

ननु सर्वगतस्यात्मनः कथं परिस्पन्द इत्याशङ्कापाकरणायोक्तम् — **मनोभूतपरिस्पन्द** इति ॥ मनसो भूताना च पृथिव्यादीनां देहेन्द्रियाकारेण परिणताना यः परिस्पन्दः स आत्मनः परिस्पन्द इत्युच्यते, न पुनरात्मसमवेतः । अतो नोक्तदोषः । कथं पुनर्मनोभूतसमवेतः परिस्पन्द आत्मनः स्यात्, स्वाश्रिते हि व्यापारे स्वयं कर्ता भवति इत्यत उक्तम् — **तत्प्रयत्नज** इति । तस्यात्मनः प्रयत्नाज्जातत्वान्मनोभूताश्रितोऽपि परिस्पन्द आत्मन इत्युच्यते, नात्माश्रितत्वेन । कथं पुनस्तत्प्रयत्नजत्वमात्रेणान्याश्रितोऽपि व्यापारस्तस्य स्यादित्यत उक्तम् — **विक्लित्त्यादिर्यथा** इति । यथा विक्लित्त्यादिस्तण्डुलादिसमवेतोऽपि देवदत्तस्य व्यापारस्तथेहापीति ॥

ननु विक्लित्त्यादिर्देवदत्तादीनां व्यापार इत्येतदेव कुत इत्यत आह — **तस्मिन्साधनोपनिपातत** इति । तस्माद्वि(स्मिन् वि)क्लित्त्यादौ कर्त्रादीना साधनाना यत उपनिपात अन्योन्यसम्बन्धो न स्वाश्रितव्यापारमात्रे । अतो देवदत्तादिसाधनाधीनात्मलाभतया तदाश्रितो विक्लित्त्यादिस्तत्क्रियात्मता न जहातीत्यर्थः ।

इदानी श्लोकं विवृणोति — **आत्ममनस्संयोगविशेषाद्विज्ञानसङ्कल्पाद्यु[6]त्पत्तिस्तन्निबन्धनमात्मसमवेतादृष्टप्रयत्नहेतु[7] मनसि कर्म परिस्पन्दरूपमुपेयते । आत्मप्रयत्नापेक्षश्च भूतेषु द्रव्योपादानादिलक्षणः परिस्पन्दः । उभयोरपि (योऽप्ययं) आत्मनस्तदधीनत्वादिति ।**

---

1 संयोगाद्विज्ञानसंकल्पविशेषाद्युत्पत्ते (ख.)
2 हेतुकं (ख.)
3 कर्म स्पन्द (ख.)
4 दानलक्षण (क.)
5 रप्यात्मन (ख.); रप्यसावात्मन (ग.)
6 उत्पत्तितन्निबन्धन (च.)
7 हेतु (छ.)

अयमर्थः — मनोभूतपरिस्पन्द आत्मप्रयत्नाज्जायते[1] । कथम्? आत्ममनसोऽर्थः संयोगविशेषः तस्मादसमवायिकारणादात्मनि समवायिकारणे विज्ञानं सङ्कल्पविशेषश्च [2]यागादिर्देवतोद्देशेन द्रव्यत्यागादिरूप उत्पद्यते । आदिग्रहणादिच्छादयश्च । यश्चासौ ज्ञानाद्युत्पत्तिहेतुः[3] आत्ममनस्संयोगः तस्य निबन्धनं कारणं मनसि परिस्पन्दरूपं कर्माभ्युपगम्यते ।

नन्वात्ममनसोः संयोगो नित्यः । तस्य कथं मनःपरिस्पन्दो हेतुः (न) स्यात्? उच्यते — [4]आत्मप्रदेशविशेषेणाप्राप्तेन मनसो यः कादाचित्कः संयोगः स ज्ञानाद्युत्पत्तिहेतुरिति तस्य मनःपरिस्पन्दो हेतुरिहोच्यते इति । किंकारणं किं (णकं) पुनस्तन्मनसि कर्मेत्यपेक्षायामुक्तम् — आत्मसमवेतादृष्टप्रयत्नहेत्विति । आत्मनि समवेतं यददृष्टं धर्माधर्मलक्षणं प्रयत्नश्च तावदृष्टप्रयत्नौ यस्य कर्मणो हेतू तदेतदात्मसमवेतादृष्टप्रयत्नहेतु मनसि कर्मेति ।

एवं ज्ञानसङ्कल्पाद्युत्पत्तिकारणान्तःकरणसंयोगहेतुतया आत्मनः परिस्पन्दं निरूप्य तस्यात्मप्रयत्नजत्वं चोक्त्वा (भूतपरिस्पन्द) स्वरूपं (तस्य) आत्मप्रयत्नजत्वं च दर्शयितुमुक्तम् — आत्मप्रयत्नज(त्नापेक्ष)श्च भूतेषु द्रव्योत्पादन (व्योपादानादि) लक्षणं (णः) परिस्पन्द इति । योऽयं द्रव्योपादानलक्षणः परिस्पन्दः स आत्मप्रयत्नापेक्षः । सति ह्यात्मप्रयत्ने तत्संयुक्तेषु देहाकारपरिणतेषु भूतेषु द्रव्योपादानादिलक्षणः परिस्पन्दः । अतः स तदपेक्षः । आत्मप्रयत्नाधीनत्वाच्च उभयोऽपि अयं मनःसम्बन्धी भूतसम्बन्धी च परिस्पन्द आत्मन एव तदधीनत्वादित्येतदुक्तमुभयोऽपीत्यादिना ।

---

1. जायते आत्म (च.)
2. यागादि देवतो (च.)
3. हेतुकात्म (छ.)
4. आत्मपरिस्पन्दविशेषेण (क, ख, ग, घ, ङ, च.)

**विक्लित्त्यादिवत्[1] । विक्लित्तिच्छिदाभिदास्तण्डुलादिसमवायिन्योऽसमवेता[2] अपि देवदत्ते[3] तत्क्रियाः, तासु तस्य कर्तृत्वात्, प्रधानक्रियायां सर्वकारकोपनिपातात्, एकवाक्यत्वात् । न हि स्वव्यापारविषयः करणादिभावः कारकाणाम्, तेषां [4]भेदादेकवाक्यत्वानुपपत्तेः[5] ।**

एवं श्लोकस्य पूर्वार्धं व्याख्यायाधुनोत्तरार्धं व्याख्यातुकामो विक्लित्त्यादिर्यथेति निर्दिष्टं दृष्टान्तं व्याचष्टे— **विक्लित्त्यादिवत् । विक्लित्तिच्छिदाभिदास्तण्डुलादिसमवायिन्योऽसमवेता अपि देवदत्ते तत्क्रियास्तासु तस्य कर्तृत्वादिति ।**

अयमर्थः — तण्डुलान् पचतीत्यत्र धात्वर्थभूता विक्लित्तिस्तण्डुलेषु समवेता, घटं भिनत्तीत्यत्रापि भिदा घटे समवेता, वृक्षं छिनत्तीत्यत्र च छिदा वृक्षे समवेता, न देवदत्ते । ताश्चैता विक्लित्तिच्छिदाभिदाः तण्डुलादिसमवायिन्यो देवदत्ते च(चा) समवेता अपि (तत्) क्रियास्तस्य देवदत्तस्य क्रिया एवेति । कथं पुनरन्यसमवायिन्यो देवदत्तेऽसमवेतास्तत्क्रिया वा स्युः इत्याशङ्क्याह — **तासु तस्य कर्तृत्वादिति ।** तासु विक्लित्त्यादिषु तस्य देवदत्तस्य कर्तृत्वात् तस्य क्रिया भवन्त्येवेत्यर्थः ।

कथं पुनस्तासु देवदत्तस्य कर्तृत्वमित्यपेक्षायामाह — **प्रधानक्रियायां सर्वकारकोपनिपातादिति ।** प्रधानक्रिया फलक्रिया भाव्यनिष्ठस्वभावा क्रिया तस्यां सर्वेषां कारकाणामुपनिपातात् अन्वयादित्यर्थः ।

कथं पुनस्सर्वकारकाणां प्रधानक्रियोपनिपात इत्याशङ्क्याह — **एकवाक्यत्वादिति ।**

अयमर्थः — एकार्थताकृतं यदेकवाक्यत्वं पदानाम् तदेवं सत्युपपद्यते, अनेककारकसाध्यैकक्रियाप्रतिपादनात् । एका हि प्रधानक्रिया, न पुनः कारकाणां

---

1. वत्—तथाहि—विक्लित्ति (क, ख, ग.)
2. देवदत्तेऽसमवेता (ग.)
3. देवदत्तस्य क्रियाः (ग, घ, ङ.)
4. हेतुभेदा (ङ.)
5. वाक्यता (ग.)

**एवञ्च कर्तृविनियोज्यतया सर्वसाधनानां [1] तद्व्यापारः कर्तुरिति तेषां भावनान्तर्गतिः [2] तन्मुखेन साधनताप्युपपन्ना ।**

प्रातिस्विकावान्तरक्रियावच्छिन्ना । अतः सर्वकारकाणां प्रधानक्रियोपनिपात एव तत्प्रतिपादकानां पदानामेकवाक्यभावहेतुरिति ।

ननु स्वव्यापारोपनिपातादेव कारकाणामनपेक्ष्य प्रधानक्रियोपनिपातमेकवाक्यभावः कस्मान्नेष्यत इत्याशङ्क्याह — **न हि स्वव्यापारविषयः करणादिभावः कारकाणाम् तेषां भेदादेकवाक्यत्वानुपपत्तेरिति** ।

स्वव्यापारे सत्यपि कर्तृत्वे तद्विपर्ययः (द्विषयः) करणादिभावो न सम्भवति । यदि कारकाणां करणादिभावः स्वव्यापारविषयः ततः तेषां स्वव्यापाराणां भेदात् एकविषयोपनिपाताभावादेकवाक्यता न स्यात् । प्रधानक्रियाविषयत्वे तु तस्याः सर्वकारकसाधारणत्वादेकत्वाच्चैकवाक्यतोपपद्यते । स्वव्यापारद्वारेण च प्रधानोपनिपातः । तत्र कर्ता स्वव्यापारे कर्तृत्वात्प्रधानक्रियायां कर्ता भवति । कारकान्तराणि तु स्वव्यापारे कर्तृणि सन्ति प्रधानक्रियायां करणादिभावेन सम्बध्यन्ते । तस्याः कर्ता समवायिकारणम् । कारकान्तराणि तु निमित्तकारणमिति विशेषः । तस्मादात्मप्रयत्नजत्वान्मनोभूतपरिस्पन्द आत्मनः विक्लित्त्यादिरिव देवदत्तादेरिति प्रतिपादितस्य फलं दर्शयति — **एवञ्च कर्तृविनियोज्यतया सर्वसाधनानां तद्व्यापारः कर्तुरिति तेषां भावनान्तर्गतिः तन्मुखेन साधनताप्युपपन्नेति** ।

कर्तृविनियोज्यतया सर्वकारकाणां तेषां व्यापाराः कर्तुरेव व्यापारा भवन्ति । ततश्च सर्वकारकव्यापाराणां कर्तृव्यापारान्तर्भावात् भावनान्तर्गतिरुपपन्ना । तन्मुखेन

---

1. तद्व्यापाराः (क.)
2. तन्मुखेन च (ग, घ, ङ.)

**परोपाधिक्रियारूपो[1] ज्ञायते न क्रियान्तरम् ।**
**सम्बन्धादेव साध्यत्वमतः करणसङ्गतिः ॥ ५० ॥**

कारकान्तरव्यापारमुखेन कर्तुरपि साधनता कर्तृतोपपन्ना इति । न हि साक्षात् कर्तुः फले व्यापारः कारकान्तरव्यवधानमन्तरेण । अपि च यदि कारकान्तरव्यापाराः कर्तुर्नस्युः, तदा न कर्तुः फलसाधनत्वम्, अन्यव्यापारफलेऽन्यस्य कर्तृ (र्तुः) साधनत्वेऽतिप्रसङ्गात् । यदा तु कारकान्तरव्यापारा अपि कर्तृविनियोज्यतया कर्तृव्यापारान्तर्भावं भजेरन्, तदा तद्व्यापारेण कर्तुः साधनताप्युपपद्यत इत्यर्थः ।

अथवा तन्मुखेन साधनताप्युपपन्नेत्यस्यायमर्थः—भावनान्तर्गतिमुखेन कारकान्तराणां फलसाधनताप्युपपन्नेति ।

ननु प्रयत्नपरिस्पन्दयोरन्यतरस्य करोत्यर्थत्वे कथं चैतन्यमूर्तिविरहात् तद्रहितेषु करोतेः प्रयोगः? उपचारत इति ब्रूमः । प्रयोगप्राचुर्याच्च नोपचारबुद्धिरिति सन्तोष्टव्यम् ॥

इदानीमस्मिन्पक्षे पूर्वपक्षवादिनोद्भावितान्दोषान्परिहर्तुकाम आह — तत्र यदुक्तम् 'धातुप्रत्यययोर्वाच्ये प्रतीयेते न हि क्रिये' इति, तथा 'सम्बन्धो नावकल्पेत द्वयोस्साध्याभिधायिनोः' इति, तथा 'न भावे नापि धात्वर्थे कार्ष्ठैरिति सगागमः । अक्रियात्वादन्यरोधात्,' इति; एतद्दूषणत्रयमनेन श्लोकेन परिहरति —

**परोपाधिक्रियारूपो ज्ञायते न क्रियान्तरम् ।**
**सम्बन्धादेव साध्यत्वमतः करणसङ्गतिः** ॥ इति ।

परोपाधिक्रियारूपो धात्वर्थः परोपाधिकमस्य क्रियारूपम् न स्वाभाविकम् प्रत्यया-भिधेयक्रियोपरागकृतम् । अतो न क्रियान्तरं ज्ञायते । यतश्च धात्वर्थस्य

1. रूपत्वात् (ग).

[1] धात्वर्थस्य भावनामनुरञ्जयतः तद्विषयताप्रतीत्या[2] तत्परामर्शकृतं[3] तदन्तर्गतस्य [4] क्रियात्वमिति कुतः क्रियाद्वयप्रत्ययः ?[5] न हि जातिगुणोपरक्तेषु द्रव्येषु तद्रूपभेदः ।

प्रत्ययार्थसंबन्धादेव साध्यत्वम्, न स्वतः, अतः 'सम्बन्धो नावकल्पेत' इति प्रसङ्गः परिहृतः, सम्बन्धाभावे धात्वर्थसाध्यताभावप्रसङ्गात्। यतश्च भावनासम्बन्धादस्य साध्यत्वम्, अतः काष्ठादिना करणेन 'काष्ठैः पाकः' इति सम्बन्ध उपपद्यते । न च करणत्वाद्धात्वर्थस्य करणान्तरासङ्गतिराशङ्कनीया, करणस्यापि परोपाधिक्रियारूपतया करणसङ्गत्युपपत्तेरिति ॥

श्लोकस्यार्थं विवृणोति — **धात्वर्थस्य भावनामनुरञ्जयतस्तद्विषयताप्रतीत्या तत्परामर्शकृतं** तदन्तर्गतस्य **क्रियात्वमिति कुतः क्रियाद्वयप्रत्ययः? न हि जातिगुणोपरक्तेषु द्रव्येषु तद्रूपभेद** इति ।

गुणविशेषात्मकस्यापि धात्वर्थस्य भावनामनुरञ्जयतः विशिक्ष(ष)तः तद्विषयताप्रतीत्या तदाकारताप्रतीत्या तत्परामर्शकृतं तत्सम्बन्धकृतं तदन्तर्गतस्य तस्या भावनाया लीनस्याविभागमिवापन्नस्य क्रियात्वम्, न तु क्रियाया इव स्वत एव । तत्र कुतः क्रियाद्वयप्रत्ययप्रसङ्गः? तत्र दृष्टान्ताभिधानम् — **न हीत्यादि** । यथा द्रव्यस्य गौरिति रूपं गोजात्युपरागात्, न स्वतः, यथा च शुक्लरूपं शुक्लगुणोपरागात्, न स्वतः; न च द्रव्यजात्योः गोरूपं भिद्यते, गुणद्रव्ययोश्च शुक्लं रूपम्, द्रव्यस्य स्वतोऽतद्रूपत्वात्, तथा धात्वर्थस्य स्वतोऽसाध्यत्वान्न साध्यरूपप्रत्ययप्रसङ्ग इति।

---

1 धात्वर्थस्य खलु भावना (क, ग.)

2. प्रतीते तस्यां प्रतीत्या तत्परामर्श (ग.)

3. कृत· (क.)

4 भावनात्वं क्रियात्वमिति (क, ग.)

5. प्रत्ययप्रसङ्ग· (क.) ; न्धितयैव च साध्यता (ख)

[1] **भावनासम्बन्धितयैव तस्य साध्यता न** [2] तत्सम्बन्धं **विहन्ति, तद्भावे** [3] **तस्याप्यभावप्रसङ्गात् । अतश्च करणसम्बन्धोऽप्युपपन्नः,** [4] **भावनाविषयत्व-मनुपयतः करणतायोगात्** [5] **साध्यताप्रतीतेः** क्रियारूपापत्तेः ।

सम्बन्धादेवेत्यादि व्याचष्टे — **भावनासम्बन्धितयैव तस्य साध्यता न तत्संबन्धं विहन्ति तद्भावे तस्याप्यभावात्** (वप्रसङ्गात्) इति । भावनासम्बन्धकृतं यत्साध्यत्वं धात्वर्थस्य न (तत्) तत्सम्बन्धं विहन्ति, तद्भावे तस्याप्यभावप्रसङ्गादिति साध्यत्वस्यैवाभावप्रसङ्गादित्यर्थः ।

अतः करणसङ्गतिरित्येतद्याचष्टे — **अतश्च करणसम्बन्धोऽप्युपपन्नः, भावना-विषयत्वमनुपयतः करणतायोगात् साध्यताप्रतीतेः क्रियारूपापत्तेरिति** । यतो भावनासम्बन्धकृतं धात्वर्थस्य साध्यत्वम्, अतः करणस्यापि करणान्तरेण काष्ठादिना सङ्गतिरुपपद्यते । यतो भावनाविषयतामनापन्नस्य करणता न विद्यते, तेनावश्यं धात्वर्थस्य भावनाकरणत्वाय भावनाविषयत्वमभ्युपगन्तव्यम् । भावनाविषयत्वे च साध्यतया क्रियारूपापत्तेः काष्ठादिकरणान्तरसङ्गतिरुपपद्यते । एवञ्च सति 'तेषामुत्पत्तौ' इति सूत्रं धात्वर्थाभिप्रायमुपपन्नं स्यादिति ।

यश्चात्र विक्लिदिपच्योः एकार्थत्वात् 'विक्लिद्यन्ति पचन्तीति न विशेषः प्रकल्पते' इत्युक्ते कर्तृभेदादर्थभेद इति परिहारेऽभिहिते कर्तृलक्षणविकल्पेन

---

1. संवन्धेनैव (क.)
2. संवन्धमपि हन्ति (क.)
3. तस्या अप्यभावात् (क, ख.)
4. विषयतामुपयतः (ख); विषयत्वमनववत्वं (क.)
5, सत्ताप्रतीतेः (क.)

[1]प्रधानव्यापृतिर्यस्य धात्वर्थे [2]प्रत्यपीष्यते ।
स कर्तातः पचन्तीति विक्लिद्यन्तीति भिद्यते ॥ ५१ ॥

[3]न वै खल्वगुणतः धातुना अभिधीयमानव्यापारः कर्ता, येन प्रत्ययार्थः पर्यनुयुज्येत, अपि तु धात्वर्थं प्रत्यभिसंहितप्रधानव्यापारः,

धात्वभिहितव्यापार(त्वस्य) कर्तृलक्षणापादनेन कः प्रत्ययार्थ इति पर्यनुयोगः कृतः, तत्परिहारायाह —-

प्रधानव्यापृतिर्यस्य धात्वर्थं [4]प्रत्यपीष्यते ।
स कर्तातः पचन्तीति विक्लिद्यन्तीति भिद्यते ॥ इति ।

यदि धात्वभिहितव्यापारत्वं कतृलक्षणम्[5] स्यादेष दोषः । न च तत्कर्तृलक्षणम् । किं तर्हि? यस्य व्यापारः प्रत्ययेन धात्वर्थं प्रति प्रधानतया विशेष्यतया अभिधीयते स कर्तेति । अतो विक्लिद्यन्ति पचन्तीत्यर्थभेद उपपद्यते, क्वचित्तण्डुलादिव्यापारस्य धात्वर्थं प्रति प्रत्ययेनाभिधानात्, क्वचिद्देवदत्तव्यापारस्येति श्लोकस्यार्थः ।

अस्याविष्करणायाह — **न वै खल्वगुणतो धातुना अभिधीयमानव्यापारः कर्ता येन प्रत्ययार्थः पर्यनुयुज्येत, अपि तु धात्वर्थं प्रत्यभिसंहितप्रधानव्यापारः** इति ।

वै इति अक्षमा सूचयति । धात्वर्थः (र्थं) प्रत्यभिसंहितः विवक्षितः प्रधानतया यस्य व्यापारः स तथोक्तः ।

---

1 प्रधानं व्यापृति — पर्यनुयुज्येत; अय भाग न दृश्यते (क) मातृकायाम् ।
2. प्रसमीक्ष्यते (ग)
3 न खलु (ख.)
4 प्रतीति । यदि (च.)
5. लक्षण स्यात्, स्यादेष (च)

**सर्वत्र धात्वर्थस्य कर्तृव्यापारं [1] लक्ष्यमभिधेयं वा प्रति विशेषणत्वात् । तेन विक्लिद्यन्तीति तण्डुलव्यापारस्य [2] ज्वलनावयवाभिघातजन्मनोऽवयवाश्रितस्य स्थाल्युदकाद्यनुसरणात्मकस्य धात्वर्थं प्रति प्रधानस्याभिधानम्, पचतीत्यत्र तु देवदत्तव्यापारस्याधिश्रयणादेः प्रत्ययेनाभिधानादर्थभेदः [3] कर्तृभेदश्च सिद्ध्यतीति न प्रत्ययार्थपर्यनुयोगावकाशः । [4] कथं पुनस्तुल्यार्थत्वात्पाचिना विक्लिदेः परेण प्रत्ययेन**

धात्वर्थं प्रति भावनायाः प्राधान्यं दर्शयति—**सर्वत्र धात्वर्थस्य कर्तृव्यापारं लक्ष्यमभिधेयं वा प्रति विशेषणत्वादिति ।**

'किं करोति ? पचति' इत्यादौ अभिधेयं प्रति विशेषणत्वम्, 'का क्रिया ? पाकः' इत्यादौ लक्ष्यं प्रतीति प्रतिपत्तव्यम् । यथोक्तकर्तृलक्षणाभ्युपगमे सुपरिहरः पर्यनुयोग इत्याह—**तेन विक्लिद्यन्तीति तण्डुलव्यापारस्य ज्वलनावयवाभिघातजन्मनोऽवयवाश्रितस्य स्थाल्युदकाद्यनुसरणात्मकस्य (धात्वर्थं प्रति) प्रधानभूतस्याभिधानम् । पचन्तीति (तीत्यत्र तु) देवदत्तव्यापारस्ये (स्याधिश्रयणादेः प्रत्ययेनाभिधानादर्थ) त्यर्थभेदः कर्तृभेदश्च सिद्ध्यतीति न प्रत्ययार्थपर्यनुयोगावकाश** इति ।

विक्लिद्यन्तीत्यत्र तण्डुलव्यापारस्याभिधानम् । तस्य विशेषणं—ज्वलनावयवाभिघातजन्मन इति । ज्वलनस्यावयवैर्योऽभिघातो वेगवान्संयोगः तेन लब्धजन्मन इति । तस्य विशेषणान्तरम्—अवयवाश्रितस्येति । तण्डुलावयवाश्रितस्य अवयावयविनोरभेदात्तण्डुलव्यापारनिर्देशार्हस्य साक्षात्तण्डुलसम्बन्धिनो वा स्थाल्युदकाद्यनुसरणात्म-

---

1 अभिधेयं लक्ष्यं च (ग.)

2 ज्वलनाभिघातजन्मनोऽवयवाधेयं वा प्रति विशेषणत्वात् । श्रितस्य स्थाल्युद्धरणसंचरणात्मनो वा प्रधानभूतस्याभिधानात् पचतीति देवदत्तव्यापाराभिधानादर्थभेद (ख.)

3 श्चास्तीति (क, ख.)

4. 'कथं' (ख) नास्ति

तण्डुलव्यापार[1] एव प्रयोक्तृभिः विवक्ष्यते, न देवदत्तव्यापारोऽपि पचेः परेणै(णे)व ? प्रकृतीनां रूपभेदात्तुल्यार्थत्वेऽपि स्वार्थे प्रत्ययस्य शक्तिभेदात् ।

भार्या दारा जलान्याप एकार्थत्वेऽपि दृश्यते ।
प्रकृते रूपभेदेन प्रत्ययार्थो विशेषवान् ॥ ५२ ॥

कस्य धात्वर्थं प्रति प्रधानस्याभिधानम् । पचतीत्यत्र तु देवदत्तव्यापारस्याधिश्रयणादेः प्रत्ययेनाभिधानादर्थभेदः कर्तृभेदश्च सिद्ध्यतीति न प्रत्ययार्थपर्यनुयोगावकाश इत्यभिप्रायः ।

अत्र चोदयति — **कथं पुनस्तुल्यार्थत्वात्पचिना विक्लिदेः परेण प्रत्ययेन तण्डुलव्यापार एव प्रयोक्तृभिर्विवक्ष्यते, न [2] देवदत्तव्यापारोऽपि पचेः परे(णे)णेवेति ।**

उत्तरमाह—**प्रकृतीनां रूपभेदात्तुल्यार्थत्वेऽपि स्वार्थे प्रत्ययस्य शक्तिभेदादिति** । प्रकृतीनां रूपभेदात्तुल्यार्थत्वेऽपि तत्परस्य प्रत्ययस्य शक्तिवैचित्र्यमुपपद्यते इति ।

अत्र दृष्टान्तमाह —

**भार्या दारा जलान्याप एकार्थत्वेऽपि दृश्यते ।**
**प्रकृते रूपभेदेन प्रत्ययार्थो विशेषवान् ॥** इति ।

भार्या दारा इत्यत्र जलान्याप इत्यत्र च तुल्यार्थत्वेऽपि प्रकृतिरूपभेदात् प्रत्ययस्य बहुवचनस्यार्थो विशेषवानिति ।

---

1. एव विवक्ष्यते (ख, ग.)
2. व्यापारोऽपीति । अयमर्थः — पचिनातुल्यार्थोऽयं ............ परेण प्रत्ययेन तण्डुलव्यापार एव प्रयोक्तृभिर्विवक्ष्यते (छ.)

**जलानीति प्रकृत्यर्थसमवायि तदेकार्थसमवायि वा बहुत्वं बहुवचनार्थः, तथा भार्या इति। आपो दारा इति [1] तु प्रकृत्यर्थावयवसमवायि तदाश्रयैकार्थसमवायि (वा), [2] प्रकृतिरूपभेदात्तदपेक्षत्वात्प्रत्ययस्याभिधानशक्तेः [3] ।**

एतद्व्याचष्टे — **जलानीति प्रकृत्यर्थसमवायि तदेकार्थसमवायि वा बहुत्वं बहुवचनार्थः, तथा भार्या इति। आपो दारा इति तु प्रकृत्यर्थावयवसमवायि तदाश्रयैकार्थसमवायि वा प्रकृतिरूपभेदात् तदपेक्षत्वात्प्रत्ययस्याभिधानशक्तेरिति।**

अयमर्थः — जानातीति (जलानीति) यद्बहुवचन तत्प्रकृत्यर्थसमवायि बहुत्वमाचष्टे, व्यक्तिबहुत्वमाचष्टे इत्यर्थः। एतच्च व्यक्तिपक्षाङ्गीकरणेनोक्तम्। **तदेकार्थसमवायि वेति**। प्रकृत्येकार्थसमवायि वेत्यर्थः। इदन्तु जाते. प्रकृत्यर्थत्वमङ्गीकृत्योक्तम्। जातेर्व्यक्तिबहुत्वस्य च व्यक्तिषु समवायादेकार्थसमवायोऽस्तीति। अयमेव न्यायो भार्या इत्यत्रापि। आपो दारा इति त्व (इत्यत्र त्व) स्ति विशेष·। अत्र प्रकृत्यर्थावयवसमवायि बहुत्वं बहुवचनार्थः। एतदपि पूर्ववत् व्यक्तिशब्दार्थपक्षाङ्गीकरणेनोक्तम्। तदाश्रयैकार्थसमवायीति च जातिशब्दार्थपक्षाङ्गीकरणेनोक्तम् [4]। तस्य प्रकृत्यर्थस्य जात्यात्मन आश्रयो व्यक्तिः अवयवीत्यर्थः। तेन प्रकृत्यर्थाश्रयेणावयविना सहैकार्थसमवायि अवयवबहुत्वमर्थः। वा शब्दश्चात्र पूर्वत्र च व्यवस्थितविकल्पार्थः।

ननु कथमवगम्यते आपो दारा इत्यत्रावयवबहुत्वं बहुवचनार्थः, न पुनरितरत्रेव व्यक्तिबहुत्वमिति [2] तथा प्रयोगदर्शनात्। एकस्मिन्नपि ह्यब्बिन्दौ आप इत्येव प्रयोगा दृश्यन्ते, एकस्यामपि च जायाया दारा इत्येव। तस्मादवयवबहुत्वमेव तत्र बहुवचनार्थः।

---

1 'तु' नास्ति (क.)
2 प्रकृतीना रूप (क, ग.)
3 अभिधानरूपभेदाच्च प्रत्यक्षात् तथेहापि (क, ख.)
4, 'उक्तं' नास्ति (छ.)

**तथेहापि पचिपरो धात्वर्थैकार्थसमवायिनं व्यापारं कर्मकर्तृविषयः प्रत्यय आह; [1]भिन्नाश्रयं वा अन्यत्र । विक्लिदिपरस्तु प्रकृत्यै (त्यर्थै) कार्थसमवायिनमित्यनवद्यम्[2] ।**

ननु सत्यपि प्रकृतिभेदे प्रत्ययरूपभेदाभावात्कथं तदभिधानशक्तिभेदः इत्याशङ्क्याह — **प्रकृतिरूपभेदादित्यादि** । तदपेक्षत्वात् प्रकृत्यपेक्षत्वात्प्रत्ययस्याभिधानशक्तेरित्यर्थः ।

दृष्टान्तोपदर्शितन्यायं दार्ष्टान्तिके योजयति — [3]**तथेहापि पचिपरो धात्वर्थैकसमवायिनं व्यापारं कर्मकर्तृविषयं (यः) प्रत्यय आह; भिन्नाश्रय (यं वा) श्चान्यत्र । विक्लिदिपरस्तु प्रकृत्यै (त्यर्थै) कार्थसमवायिनमित्यनवद्यमिति ।**

कर्मकर्तृविषय इति । पच्यन्ते स्वयमेव तण्डुला इति धात्वर्थैकार्थसमवायी तण्डुलगतो व्यापारः प्रत्ययार्थः । पचतीत्यत्र तु प्रकृत्यर्थविक्लित्त्याश्रयातिरिक्तदेवदत्ताद्याश्रयम्[4] । विक्लिद्यन्तीत्यत्रापि प्रकृत्यर्थैकार्थसमवायीत्यर्थभेद[5] उपपद्यते इत्यभिप्रायः ।

यत्पुनरुक्तम् — 'कर्मणा च करोत्यर्थो व्याप्तोऽतस्तदयोगतः । तदभावः' इति;

---

1 भिन्नप्रत्ययश्चान्यम् (क)
2 इति निरवद्यम् (क, ख)
3 तथेहापीत्यादि (च.)
4. देवदत्ताश्रय (च.)
5. यीत्येवमर्थ (छ.)

अग्निं चिनुत इत्यत्र स्वं यज्ञं यजतीति च ।
दर्शनात्कर्मयोगस्य [1] नाभावस्तदभावतः ॥ ५३ ॥

धात्वर्थस्य हि [2] चयनस्येष्टकाः स्थलं वा [3] अव्यवधानात्कर्म, न व्यापारान्तरव्यवधीयमानो व्यभिचार्यग्निः । स तु भावनाकर्म । अग्निशब्दश्च

तत्राह —

अग्निं चिनुत इत्यत्र स्वं यज्ञं यजतीति च ।
दर्शनात्कर्मयोगस्य नाभावस्तदभावतः ॥

अग्निञ्चिनुते इत्यादौ कर्मयोगस्य दर्शनात् कर्म [र्मा] भावहेतोरसिद्धत्वान्न करोत्यर्थस्याभावश्शक्यानुमान इत्यर्थः ।

एतद्विवृणोति— [4] धात्वर्थस्येष्टकाः स्थलं वा अव्यवधानात् कर्म, न व्यापारान्तरव्यवधीयमानो व्यभिचार्यग्निः । स तु भावनाकर्मेति ।

अयमाशयः — अग्निमिति द्वितीयया अग्नेः कर्मत्वं गम्यते । तच्च भावनाकर्मत्वम्, चयनधात्वर्थस्यान्यकर्मकत्वात् इष्टकाः चयनस्य कर्म स्थलं वा । यदेष्टकादि (तिरिक्त) स्थलं नाम द्रव्यं न जायत इति पक्षः, तदा [5] इष्टका एव कर्म । द्रव्यजन्मपक्षे स्थलमिति व्यवस्थितो विकल्पः । तत्र हेतूक्तिः अव्यवधानादिति ।

अव्यवधानं हि भवतीष्टकानां स्थलस्य वा चयने, न त्वग्निः चयने कर्म भवितुमर्हति, [6] व्यापारान्तरव्यवहितत्वाद्व्यभिचाराच्च । भवति हि व्यापारान्तरमन्तरा

---

1. तदभावकः (क.)
2. 'हि' नास्ति (ख.)
3. धानान्नव्यापार (क, ख.)
4. धात्वर्थेत्यादि (च.)
5. इष्टका हि चयनस्य कर्म (छ.)
6. व्यवहितत्वात् अतो भावनाकर्मैवाग्निः । भावनायामन्तराचयनमग्निश्च (छ.)

**न स्थलवचनः अपि तु ज्वलनवचनः । एवं ह्युक्तम् — 'अत्र ह्येष प्रसिद्धः'** [1]**इति । 'स्वं यज्ञं यजति'** [2]**इति तु न भावनातोऽन्यत्र कर्मत्वमिति** [3]**वर्णितम् ।**

चयनमग्निं च स्थलस्थापनादिलक्षणम् । व्यभिचरति चाग्निश्चयनम् । सत्यपि तस्मिन्नसति व्यापारान्तरेऽभावात् । अतो भावनाकर्मैवाग्निः । भावनायाश्च चयनोपक्रमस्थलस्थापनादि-पर्यन्तायाः पूर्वापरीभावेनैकस्या एवावस्थानं (नात्) न व्यापारान्तरव्यवधानं व्यभिचारो वा अग्नेरिति ।

नन्वग्निशब्दस्य स्थलवचनत्वान्न व्यवधानं व्यभिचारो वा अग्नेरित्याशङ्क्याह — [4]**अग्निशब्दो न स्थलवचनः अपि तु ज्वलनवचन इति ।**

तत्र भाष्यमुदाहरति — **एवं ह्युक्तं—अत्र ह्येष प्रसिद्ध इति ।** तस्मादग्निश्चिनुते इति अयमर्थः — स्थलं चिन्वंश्चयनेनाग्निं भावयतीति । स्वं यज्ञं यजतीत्यादि व्याचष्टे — **स्वं यज्ञं यजतीति तु न भावनातोऽन्यत्र कर्मत्वमिति वर्णितमिति ।**

यज्ञमिति द्वितीयानिर्दिष्टं यज्ञस्य यत्कर्मत्वं न तद्भावनातोऽन्यत्र धात्वर्थे, अपि तु भावनायामेव, स्वात्मनि क्रियाकारकभावानुपपत्तेः एकस्यैव यज्ञस्य क्रियात्वं कर्मत्वं च नोपपद्यत इति । एतच्च वर्णितं पुरस्तात् — [5]'तदेव तस्य करणं न वै कर्म च कल्पते । भावनां संगिरन्त्येते(न्तेऽतो) धात्वर्थव्यतिरेकिणीम्' इत्यत्र । तथा महाभाष्येऽपि

---

1. इति भाष्यकारेण (ग, घ, ङ.)
2. यजतीति न (क, ख.)
3. दर्शितम् (क, ख, ग.)
4. अग्निशब्देत्यादि (च.)
5. तदेवेत्यादिना (च.)

g

तथा महाभाष्ये कर्मद्वयसम्बन्धो विक्लित्तेर्भावनाभेदेनैव[1] दर्शितः — 'इह तावत्तण्डुलानोदनं पचतीति, द्व्यर्थः पचिः, तण्डुलान्विक्लेदयन् ओदनं निर्वर्तयति' इति[2] ।

प्रयोजकक्रियामाहुः कर्तृव्यापारगोचराम् ।
कर्तृव्यापारविषयो धातोरर्थो विवक्ष्यते ॥ ५४ ॥

विक्लित्ति (त्तेः) भावनाभेदेन कर्मद्वयसम्बन्धो दर्शित इत्याह — **तथा महाभाष्ये कर्मद्वयसम्बन्धो विक्लित्ति (त्तेः) भावनाभेदेन दर्शित इति ।**

भाष्यग्रन्थम् उदाहरति — **इह तावत्तण्डुलानोदनं पचतीति, द्व्यर्थः पचिः, तण्डुलान् (विक्लेदयन्) ओदनं निर्वर्तयतीति ।** 'कर्तुरीप्सिततमं कर्म' इत्यत्रोक्तम्—'अथेह कथं भवितव्यम्, तण्डुलानोदनं पचतीति आहोस्वित् तण्डुलानामोदनं पचतीति(इति) प्रश्नस्योत्तरमुक्तम्—'उभयथा भवितव्यम् इह तावत्' इयादि । तत्र विक्लित्तेः तण्डुलाः कर्म भावनायास्त्वोदन इति दर्शितम् । ओदनस्यैव कर्मत्वे तण्डुलानामिति स्यात्, न तण्डुलानिति । पचिश्च व्यर्थः । निर्वर्तयतीति च स्यात् । तण्डुलानामेव कर्मत्वे ओदनमिति व्यर्थः (र्थम्)। तस्मादुभयोस्तण्डुलौदनयोरुभयत्र विक्लित्तौ भावनायां च कर्मत्वमित्यर्थः । अत्र पूर्वपक्षे सिद्धान्ते चायं विशेषः — पूर्वपक्षे तु धातुरेव सर्वव्यापारवाची । सिद्धान्ते तु धातुरेकत्र व्यापारे वर्तते परस्मिन्प्रत्ययः । अपरोऽपि विशेषः — स्वत एव साध्यात्मा धात्वर्थः क्रियारूपः कारकैः सम्बध्यत इति पूर्वपक्षे । सिद्धान्ते तु स्वयमक्रियारूपगुणविशेषात्मा प्रत्ययाभिधेयक्रियोपरागादापन्नक्रियाभावः कारकैः संबध्यते इति ।

यत्पुनरुक्तं 'तुल्यार्थत्वं भावयति भवतीति प्रसज्यते' इति, तत्राह —

**प्रयोजकक्रियामाहुः कर्तृव्यापारगोचराम् ।**
**कर्तृव्यापारविषयो धातोरर्थो विवक्ष्यते ॥**

---

1. संबन्धाद्विक्लित्तेः (ख.)
2. यद्यपि द्व्यर्थः पचिरित्युक्तम् । द्वौ तावद्व्यापारौ कर्मान्वयगोचरौ दर्शितौ । तत्रोदनं निर्वर्तयतीति यथा प्रत्ययार्थस्तथा प्रतिपादितम्'— इत्यधिकं दृश्यते (क, ख, ग) मातृकासु.

[1]**स्वव्यापारे सर्वस्य (कर्तृत्वात् अन्यथा कारकत्वायोगात्) नियोगात्कर्तृव्यापारविषयः प्रेरणादिः प्रयोजककर्तृव्यापारो णिजर्थः, धात्वर्थविषयः कर्तृव्यापारस्तिङर्थ इति न भवति भावयत्योस्तुल्यार्थतेति[2]।**

[3]**तदेवं भावनार्थत्वादाख्यातप्रत्ययस्य हि ।**
**यागेन भावयेत्स्वर्गमित्यर्थः [4]शब्दनिर्मितः ॥ ५५ ॥**

भावयतीत्यत्र प्रयोजकव्यापारं णिजाचष्टे, भवतीत्यत्र तु कर्तृव्यापारं तिङिति न तुल्यार्थत्वप्रसङ्गः । कः पुनः प्रयोजकव्यापारः ? को वा कर्तृव्यापारः इति ? । उच्यते — कर्तृव्यापारविषयः प्रयोजकव्यापारः, धात्वर्थविषयः कर्तृव्यापार इति । एतदुक्तं भवति — भवने व्याप्रियमाणो घटो णिजर्थस्य प्रयोजकव्यापारस्य विषयः, तिङभिधेयस्य घटकर्तृकस्य व्यापारस्य तदेकार्थसमवायी भवनं नाम धात्वर्थो विषय इति ।

एतदेवोपपादयति—[5]**स्वव्यापारे सर्वस्य कर्तृत्वात्, अन्यथा कारकत्वायोगात् कर्तृव्यापारविषयः (प्रेरणादिः) प्रयोजकव्यापारो णिजर्थो धात्वर्थविषयः कर्तृव्यापारस्तिङर्थ इति न भवति भावयतीति (यत्योस्तु) तुल्यार्थतेति।** स्वव्यापारे सर्वस्येत्यनेनासतो घटस्य कर्तृत्वाशङ्का परिहरति। नात्यन्तमसत्त्वं घटस्योत्पत्तेः प्रागपीत्यभिप्रायः। तस्मादेवमुक्तेन न्यायेन णिजर्थस्य तिङर्थस्य व्यापारस्य (च) भेदान्नभवति भावयतीति तुल्यार्थताप्रसङ्ग इति ।

इदानी धात्वर्थातिरिक्तप्रत्ययाभिधेयभावनासमर्थनस्य फलं दर्शयति —

[6]**तदेवं भावनार्थत्वादाख्यातप्रत्ययस्य हि ।**
**यागेन भावयेत्स्वर्गमित्यर्थः शब्दनिर्मितः ॥**

---

1 स्वव्यापारविषय प्रयोजकव्यापारो णिजर्थ (क, ख.)
2. भावयतीति तुल्यार्थत्वम् (क, ख.)
3. तदित्थं (क, ख.)
4 शब्दगोचर' (क, ख.)
5. स्वव्यापारेत्यारभ्य तुल्यार्थतेत्यन्तेन (च.)
6 तदेवमित्यादिना (च.)

[1] **तत्कथम्?**

**अपेक्षितत्वाद्भाव्यस्य कामशब्दा हि तत्पराः ।**
**विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम् ॥ ५६ ॥**

[2] **यद्यपि स्वर्गादयः पुरुषविशेषणत्वेन श्रूयन्ते, तथापि कामश्रुतयः तत्प्रधानाः, 'दण्डी प्रैषानन्वाह', 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति**

ननु स्वर्गस्य भाव्यताप्रतीत्यभावात् सत्यामपि प्रत्ययवाच्यायां भावनायां नैषोऽर्थः सिद्ध्यति इत्यभिप्रायेण पृच्छति — **तत्कथमिति** ।

उत्तरमाह — **अपेक्षितत्वाद्भाव्यस्य कामशब्दा हि तत्पराः ।**
**विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम् ॥**

अयमर्थः — यस्मात्कामि(म)शब्दाः फलसमर्पणपराः, भाव्यस्य भावनापेक्षि-(त)त्वात्, तस्माद्यागेन भावयेत्स्वर्गमित्येषोऽर्थः शब्दनिर्मित इति ।

तदेतद्व्याचष्टे—**यद्यपि स्वर्गादयः पुरुषविशेषणत्वेन श्रूयन्ते तथापि कामि(म) श्रुतयस्तत्प्रधानाः, 'दण्डी प्रैषानन्वाह' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति दर्शनादिति** । यद्यपि 'स्वर्गकामो यजेत' इत्यादौ स्वर्गादीनां पुरुषविशेषणतया श्रवणम्, न स्वप्रधानतया, तथापि कामश्रुतयस्तत्प्रधानाः, फलस्य भावनया अपेक्षितत्वात् आकाङ्क्षा-निबन्धनत्वाच्च सम्बन्धस्य । दृश्यते च विशेषणप्रधानत्वं 'दण्डी प्रैषानन्वाह' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ, विशेषणमात्रस्याप्राप्तत्वेन विधानार्हत्वात्, प्रैषानुवचनस्य 'मैत्रावरुणः प्रैषानन्वाह' इति प्राप्तत्वात्, ऋत्विक्प्रचरणस्यापि विकृतावतिदेशतः प्राप्तत्वाद्विधानानर्हत्वात् इति ।

---

1. तत्कथं नास्ति (क, ख.); कथं कर्मेतिचेत् (ग.)
2. यद्यपि च (क, ख.)

**दर्शनात् । कुतः ? [1] भावना (न) या भाव्यस्यापेक्षितत्वात् स्वर्गादीनां च काम्य- (मान) तया भाव्यत्वप्रतीतेः [2] द्वितीयान्तप्रयोग इव तयापि [3] इष्टत्वप्रतिपादनात् । तेन पुरुषप्रतीतिः [4] स्वर्गकामपदेऽनुवादः । [5] स्वर्गमित्येतावद्विधित्सितम्,**

**कुत** इति पूर्वाभिप्रायेण पृच्छति । उत्तरमाह — [6] **भावना (न) या भाव्यस्यापेक्षितत्वात् स्वर्गादीनां काम्यमानतया भाव्यत्वप्रतीतेरिति ।** भावना हि भाव्यप्रचर(प्रवण)णस्वभावा पदान्तरलभ्यं विशेषमाकाङ्क्षति । स्वर्गादयोऽपि कामनाविषयतया अवगतसाध्यभावाः कमपि भावनाविशेषं पदान्तरलभ्यमभिलषन्ति । ततश्चाकाङ्क्षासत्तियोग्यताभिर्भवति सम्बन्धावगम इति । **द्वितीयान्तप्रयोग** इवेति दृष्टान्तः । स्वर्गमिति द्वितीयान्तप्रयोगे यथा स्वर्गस्य साध्यत्वं गम्यते तथेहापीत्यर्थः ।

द्वितीयान्तप्रयोगविषयेण कामनाविषयस्य साम्यं दर्शयति — **तयापीष्टत्वप्रतिपादनादिति ।** तयापि द्वितीयया इष्टत्वमीप्सिततमत्वं प्रतिपाद्यते । अपिशब्देन स्वर्गकामपदेनापि इष्टत्वप्रतिपादनात्तुल्यतेत्यर्थः ।

यस्माच्च भाव्यसमर्पणपरं स्वर्गकामपदम्, तस्मात्पुरुषस्य कामयितुः प्रतीतिरनुवादः, भावनयैव भावकस्य पुरुषस्यावगतत्वादित्येतदाह — [7] **तेन पुरुषप्रतीतिः स्वर्गकामपदेऽनुवादः । स्वर्गमित्येतावद्विधित्सितम्, भाव्यविशेषपरत्वात्** इति ।

---

1. भावनायां (ग.)
2. द्वितीयाप्रयोग (क, ख.)
3. इष्टप्रतिपादनात् (ख.)
4. कामादिपदे (क, ख.)
5. विधित्सितः (क )
6. भावनाया इत्यादि (च.)
7. तेनेत्यादि (च.)

**भाव्यविशेषपरत्वात्, धात्वर्थस्य[1] श्रौतस्यापि विधिज्ञानविरोधादकर्मत्वात्[2] । करणत्वेऽपि श्रुत्यनुग्रहादविरोधात्, शास्त्राधीनत्वाद्योग्यायोग्यत्वयोरज्ञानात्,**

ननु च धात्वर्थ एव श्रौतत्वाद्भाव्यो भविष्यति, समानपदोपादानात् सन्निहित-तरो हि धात्वर्थः, स्वर्गस्तु पदान्तरसन्निधानाधीनसम्बन्धः । अतः प्रथमतरं धात्वर्थः साध्यतया सम्बध्येतेत्याशङ्क्याह — **धात्वर्थस्य च श्रौतस्यापि विधिज्ञानविरोधा-दकर्म[क]त्वात् इति ।** यद्यपि श्रौतो धात्वर्थः, वाक्यलक्षणश्च स्वर्गः, तथापि विधिविज्ञान-विरोधान्न भाव्यो भवितुमर्हति । विधिर्हि श्रेयस्साधना (नता) त्मा तिङभिधेयभावनासम्बन्धी प्रतीयमानो न धात्वर्थस्य भाव्यत्वेऽवकल्पते, तस्याश्रेयोरूपत्वात् । स्वर्गभाव्यत्वे तु न श्रेयस्साधना (नता)त्मविधिविज्ञानं विरुद्ध्यते, तस्य श्रेयोरूपत्वादिति ।

नन्वेवं सति धात्वर्थस्य श्रौतत्वं विरुद्ध्यत इत्याशङ्क्याह — [3]**करणत्वेऽपि श्रुत्यनु-ग्रहादविरोधादिति ।** करणस्यापि भाव्यत्वात्प्रच्युतस्यापि भावनामनुरञ्जयतः करणत्व-मुपेयते । ततश्च करणत्वेनाङ्गीकृते धात्वर्थे श्रुतिर्न विरुद्ध्यते, अन्वयमात्रेणापि भावनासम्बन्धश्रुत्युपपत्तेः तद्विरोधाभावादिति ।

ननु नाकाङ्क्षासन्निधिभ्यामेव केवलाभ्याम् अन्तरेण योग्यतामन्वपेता (न्वयो) भवति, योग्यत्वं च धात्वर्थस्य भावनायां करणत्वेनान्वये नास्ति, अनिष्पन्नत्वात्, निष्पन्नस्यैव च करणत्वोपलम्भादित्याशङ्क्याह — **शास्त्राधीनत्वाद्योग्यत्वस्य अयोग्यत्वाज्ञाना-दिति ।** यागादीनां स्वर्गादिसाधनभावे यद्योग्यत्वज्ञानम् [न] तच्छास्त्राधीनम्, न प्रमाणा-न्तरेण ज्ञातुं शक्यते अस्ति नास्तीति वा । यत्त्वनिष्पन्नस्य करणत्वा (त्व) न्नोपपद्यत

---

1. धात्वर्थस्य च (क, ख.)
2. अकर्म(क)ता (क, ख.)
3. करणत्वेऽपीत्यादि (च.)

(योग्यत्वस्य अयोग्यत्वाज्ञानात्) सर्वफलभावनानां[1] च धात्वर्थविशेषसाधनत्वात् ।

**स्यान्मतम् — स्वर्गादिविशेषणपरत्वेऽपि[2] गुणभावः स्वर्गादेः स्यात् । न,[3] भाव्यस्य प्रथममपेक्षणात्, साधनेषु चोपचारादिच्छायाः ।**

इति, तदसत्; निष्पन्नस्य करणत्वाभ्युपगमात् । निष्पद्यते हि यागः कर्तृव्यापारेण । निष्पादितस्य च तस्यापूर्वद्वारेण फलसाधनभाव इति नायोग्यत्वज्ञानमस्ति । न चैतदप्रसिद्धं लोक इत्याह — **सर्वफलसाधनानां** (**भावनानां**) **धात्वर्थविशेषसाधनत्वादिति** । लौकिकानामपि भावनानामेवंभावान्नेहास्त्यनुपपत्तिरित्यर्थः ।

तत्र शङ्कते — **स्यान्मतं स्वर्गादिविशेषणपरत्वेऽपि गुणभावः स्वर्गादेः स्यादिति** । स्वर्गकामादिपदानां दण्डिलोहितोष्णीषादिपदवत् सत्यपि विशेषणपरत्वे स्वर्गादीनां प्राधान्यं दुर्लभम्, गुणभावेनैव प्रतीतेः । असति च प्राधान्ये भाव्यत्वं दुरुपपादम्, भाव्यप्रधानत्वाद्भावनाया इति ।

परिहरति — **न, भाव्यस्य प्रथममपेक्षणादिति** । भाव्यं प्रथममपेक्षते भावना, तत्प्रवणस्वभावत्वात्, पश्चात्साधनं तदनुग्राहकं च । अतो भावनया भाव्यस्य प्रथममपेक्षितत्वात् अपेक्षानिबन्धनत्वाच्च सम्बन्धस्य पुरुषविशेषणस्यापि स्वर्गादेः भाव्यत्वेनैव सम्बन्धावगमात् प्राधान्यमिति ।

इतश्च भाव्यत्वेनान्वयः स्वर्गादीनामित्याह — **साधनेषू(षु चो) पचारादिच्छाया इति** । इच्छाविषयत्वं स्वर्गादीनामवगम्यमानं भाव्यत्वे सत्यनुपचरितं स्यात्, साधनत्वे त्विच्छाया उपचारप्रसङ्गादिति ।

---

1. 'च' नास्ति (ग.)
2. विशेषणवत्त्वेऽपि गुणभाव एव (क, ख.)
3. 'न' नास्ति (क.)

**ननु न [1] भाव्यप्रतिपत्तिप्रधानाः [2] कामश्रुतयः, अपि तु नियोज्यविशेष- [3] प्रतिपादनपराः । अन्यथा कस्यायमुपदेशः, को नियुज्यते, कस्येदं [4] कर्तव्यम्, इत्यज्ञानात्सापेक्षमसमाप्तमप्रतिपत्तिकरमेव [5] शास्त्रं स्यात् ।**

**नैतत्सारम्, यतः —**

अत्र कश्चिन्मीमांसकः प्रत्यवतिष्ठते — **ननु न भाव्यप्रतिपत्तिप्रधानाः कामि (म) श्रुतयः अपि तु नियोज्यविशेषप्रतिपादनपराः अन्यथा कस्यायमुपदेशः को नियुज्यते कस्येदं कर्तव्यम् इत्यज्ञानात्सापेक्षमसमाप्तमप्रतिपत्तिकरमेव शास्त्रं स्यादिति ।**

अयमाशयः — न फलसमर्पणपराः स्वर्गकामादिश्रुतयः, अपि तु नियोज्य-विशेषणा(षा)र्पणपराः । असमर्पिते हि नियोज्यविशेषे कस्यायमुपदेश इति न ज्ञायते । यस्यायमुपदेशः स नियोज्यः, यश्च नियोज्यः स ममेदं कर्तव्यमिति प्रतिपद्यते; (अ) प्रतिपन्ने च नियोज्ये कर्तव्यमिति प्रतिपत्तुरभावादप्रतिपत्तिकरं शास्त्रमनर्थकं स्यात् इति ।

अथवा दर्शनभेदापेक्षयेदं व्याख्येयम् । कस्यायमुपदेश इति उपदेशविधिवादिन मतमाश्रित्योक्तम् । को नियोज्य इति नियोगविधिवादिनाम् । कस्येदं कर्तव्यमिति कर्तव्यताप्रतिभाविधिवादिनामिति ।

एतन्निराकरोति — **नैतत्सारम्, (यतः —)**

---

1. भाव्यभेद (ग.)
2. पत्तिपराः (क, ख.)
3. प्रतिपात्ति (क.)
4. कर्मेत्यज्ञानात् (क); कर्तव्यमित्यपरिज्ञानात् (ग.)
5. मर्परिरामाप्तम् (क, ग.)

प्रतीयते [1] नियोगोऽर्थात्समर्थस्य फलार्थिनः ।
अन्यथा ह्यसमर्थानां दुर्वाराधिकृतिर्भवेत् ॥ ५७ ॥

[2] योऽपि हि शब्दान्नियोज्यविशेषावसायं मन्यते सोऽपि [3] नियोज्यविशेषप्रतिपत्तौ सामर्थ्यमुपैति । अन्यथा शब्दवशेन शक्तिकल्पनायामन्धादीना- [4] मप्यत्रार्थेऽधिकारः स्यात् । सत्यपि चेच्छब्दे [5] सामर्थ्यमुपाश्रीयते नियोज्यावगमे तदसत्येवास्तु । तस्माद्यो नियोगार्थं प्रतिपत्तुं तद्विषयं चानुष्ठातुं समर्थः फलार्थी च स नियोज्यः, असमर्थस्यानर्थिनोऽशक्येऽनभिलषिते(वा) [6] यागे प्रवर्तनायोगात् ।

प्रतीयते नियोगोऽर्थात्समर्थस्य फलाथनः ।
अन्यथा ह्यसमर्थानां दुर्वाराधिकृतिर्भवेत् ॥ इति ।

अयमर्थः — अन्तरेणापि शब्दमर्थादेव साङ्गप्रधानप्रयोगसमर्थः फलार्थी च प्रतीयते । अन्यथा सामर्थ्यानपेक्षणेऽसमर्थानामन्धबधिरादीनामधिकारो दुर्वारः स्यादिति कामश्रुतीना भाव्यविशेषार्पणपरत्वेऽपि न कश्चिद्दोष इति ।

एतद्विवृणोति—योऽपि शब्दान्नियोज्यविशेषं(षावसायं) मन्यते सोऽपि नियोज्यविशेषप्रतिपत्तौ सामर्थ्यमुपैति । अन्यथा शब्दवशेन शक्तिकल्पनायामन्धादीनामप्यत्रार्थेऽधिकारः स्यात् । सत्यपि चेच्छब्दे सामर्थ्यमुपाश्रीयते नियोज्यावगमे तदसत्येवास्तु । तस्माद्यो नियोगार्थं प्रतिपत्तुं (तद्विषयं चानुष्ठातुं) समर्थः फलार्थी च स नियोज्यः, असमर्थस्यानर्थिनोऽशक्येऽनभिलषिते वा (यागे) प्रवर्तनायोगात् इति ।

---

1 नियोगार्थात् (क, ख.)
2. योऽपि हि शब्दो (क, ख.)
3. विशेषावगमे (ख.)
4. अनिवार्योऽधिकार (क, ख.)
5. सामर्थ्यमुपैति तदसत्येवास्तु (क, ख.)
6. लषिते चार्थे (ख.)

किञ्च —

अतत्परत्वे [1] फलता (स्वर्गादे) पश्वादेर्नास्ति शब्दतः ।
न सामर्थ्यादनुष्ठानं नियोगैकनिबन्धनम् ॥ ५८ ॥

[2] यदि स्वर्गकामादिश्रुतयो न फलभेदाधिगमनपराः न शब्दवती फलता स्वर्गादीनाम्; नापि [3] सामर्थ्यतः, अनुपपद्यमानाभावात् ।

अयमभिप्रायः — शब्दान्नियोज्यविशेषलाभं मन्यमानेनापि सामर्थ्यमपेक्षितव्य-मन्धबधिराद्यधिकारनिवारणाय । अपेक्षितं चेत्सामर्थ्यं तदेवानपेक्ष्य शब्दं फलार्थिता-सहायं अधिकारम (कारा) ध्यवसायकारणं सम्पद्यते । अतोऽन्यत एव लभ्यमानत्वा-न्नियोज्यस्य न शब्दापेक्षेत्यन्यलभ्यत्वादधिकारिणो न स्वर्गकामादिपदसमर्पणीयता युक्ते-त्युक्तम् ।

इदानीं फलस्या(न)न्यलभ्यत्वात् तत्समर्पणीयत्वमवश्याश्रयणीयमित्याह —

किञ्च —

अतत्परत्वे फलता(स्वर्गादे)पश्वादेर्नास्ति शब्दतः ।
न सामर्थ्यादनुष्ठानं नियोगैकनिबन्धनम् ॥ इति ।

अयमभिप्रायः — अतत्परत्वेऽफलपरत्वे नियोज्यविशेष[ण]परत्वे कामश्रुतीनाम् पश्वादीनां फलता न शाब्दी, शब्दस्यान्यपरत्वात् । अथ सामर्थ्यात्फलसम्बन्धः सिद्ध्यति नियोज्यविशेष इवास्मत्पक्षे, तदपि न, फलकल्पनया विना अनुपपद्यमानस्य कस्य चिदभावात् । अनुष्ठानं नोपपद्यते फलेन विनेति चेत् — न, नियोगनिबन्धनत्वादनुष्ठानस्य नैमित्तिकनिषेधाधिकारयोरिवेति ।

श्लोकार्थाविष्करणायाह — **यदि स्वर्गकामादिश्रुतयो न फलभेदाधिगमनपराः न शब्दवती फलता स्वर्गादीनाम्, नापि सामर्थ्यतः अनुपपद्यमानाभावात्** इति ।

1. पश्वादेः फलता (क, ख.)
2. यदि न फलपराः स्वर्गकामादिशब्दाः (क, ख.)
3. सामर्थ्यतः । अन्यथा अनुष्ठानमुयुक्तमिति चेत् (ग.)

[1] **अन्यथा (पि) नियुज्यमाना (न) भावात् । अनुष्ठानमयुक्तमिति चेत्—न, तस्य नियोगमात्रायत्तत्वाभ्युपगमात् । एकवाक्यत्वमिति चेत्—**

अयमाशयः—यदि फलविशेषसमर्पणपराः न स्युः स्वर्गकामादिश्रुतयः तदा स्वर्गादीना फलता न सिद्ध्यति। न तावत् शब्दतस्तत्सिद्धिः, शब्दस्य नियोज्यविशेष[ण] समर्पणतया फलपरत्वाभावात्। नापि सामर्थ्यतः तत्सिद्धिः, स्वर्गादिफलत्वेन विना अनुपपद्यमानस्य कस्यचिदभावात् इति ।

ननु नियुज्यमानत्वं स्वर्गकामादे. अन्यथा नोपपद्यत इत्याशङ्क्याह—**अन्यथा (पि) नियुज्यमाना (न) भावादिति**। अन्यथा फलकल्पनेन विना नियुज्यमाना-(न)भावात् । विनापि फलकल्पनेन नियुज्यमाना दृश्यन्ते भवत्पक्षे नित्यनिषेधाधिकारयोरि-[वे]त्यभिप्रायः ।

तत्र शङ्कते—**अनुष्ठानमयुक्तमिति चेत् इति**। नियुज्यमानत्वमनुपपन्नं माभूत्, अनुष्ठान[त्व]मनुपपन्नं इति चेदिति ।

परिहरति—**न, तस्य नियोगमात्रायत्तत्वाभ्युपगमादिति** । नियोगवादिना हि नियोगमात्रायत्तमनुष्ठानमभ्युपगम्यते नित्याधिकारे, न फलमपेक्ष्यते। तथेहापि स्यादि-त्यभिप्रायः ।

• पुनः शङ्कते—**एकवाक्यत्वमिति चेदिति** । स्वर्गकामो यजेतेति पदाना-मेकवाक्यत्वमनुपपन्नं स्वर्गादीना फलत्वेन विनेति चेदित्यर्थः ।

---

1. अनुष्ठानमन्यथा नोपपद्यत इति चेत् (क, ख॰)

[1] को विरोधः ? अन्यदिच्छति अन्यत्करोतीति स्वर्गकामो यागं कुर्यादित्ययमेव विरोधः (इति चेत्) अत एव तर्हि न पुरुषविशेषपराः स्वर्गकामादिश्रुतयः, [2] फलपरास्सन्तु ।

अपि च—

नियोगपरतन्त्रस्य पुरुषस्यान्यदिच्छतः ।
[3] क्रियान्यस्य विरुद्धेति न नियोगप्रधानता ॥ ५९ ॥

उत्तरमाह — **को विरोध इति** । एकवाक्यत्वे विरोधो नास्तीत्यभिप्रायः ।

विरोधमाशङ्कते — **अन्यदिच्छति अन्यत्करोतीति स्वर्गकामो यागं कुर्यादित्ययमेव विरोध (इति) चेदिति** । अन्यदिच्छता अन्यदनुष्ठातव्यमित्य (न) न्विताभिधानमशक्यक्रियम्, कृतीच्छयोरेकविषयत्वनियमात् । यदि च यागादीनां स्वर्गादिसाधनत्वं भवेत् स्वर्गा(यागा)दिविषया कृतिः इष्यमाणस्वर्गादिविषयापि भवत्येवेति कृतीच्छयोरेकविषयत्वोपपत्तेः स्वर्गकामो यजेतेत्येकवाक्यत्वमुपपद्यत इति ।

परिहरति — **अत एव तर्हि नियोज्यविषयपराः श्रुतयः (न पुरुषविशेषपराः स्वर्गकामादिश्रुतयः) फलपरास्सन्त्विति** ।

अयमभिप्रायः — यस्मादुक्तेन न्यायेन फल(पर)त्वेन विनैकवाक्यत्वानुपपत्तिः अत एव तर्हि एकवाक्यत्वोपपादनाय फलपरास्सन्तु स्वर्गकामादिश्रुतयो न नियोज्यविशेषसमर्पणपराः । तत्परत्वे त्वदुक्तेन न्यायेनैकवाक्यताविरोधात् इति ।

अपरमप्यनिष्टप्रसङ्गमापादयति — **अपि च** —

**नियोगपरतन्त्रस्य पुरुषस्यान्यदिच्छतः ।**
**क्रियान्यस्य विरुद्धेति न नियोगप्रधानता ॥**

---

1 अत्राविरोधः (क.)
2 फलपरास्तु (ग.)
3. अन्यक्रिया विरुद्धेति (ग.)

**अन्यदिच्छति अन्यत्करोति [1] इति विरोधं वदतो नियोगप्राधान्यं हीयते, फलार्थिताहेतुत्वान्नियोगस्य । दृश्यते च [2] नियोगसामर्थ्यादन्यदपीच्छतामन्यक्रिया परतन्त्राणाम् । भाव्यस्यैव सतो विशेषणत्वमिति चेत् —**

अयमर्थः — नियोगपरतन्त्रो हि भवत्पक्षे पुरुषः प्रवर्तते । अत एव च तत्प्रधानः । तस्यान्यदिच्छतोऽन्यस्य क्रिया विरुद्धेति वदत इच्छापारतन्त्र्याभ्युपगमात् इष्यमाणफलप्राधान्यमनिष्टमापद्यते, नियोगप्राधान्यं चेष्टं हीयते इति ।

एतद्व्याचष्टे — **अन्यदिच्छति अन्यत्करोतीति (विरोधं) वदतो नियोगप्राधान्यं हीयते** फलार्थिताहेतुत्वान्नियोज्यस्य **(गस्य) इति** । फलार्थिताहेतुत्वान्नियोज्यप्रवृत्तेः फलप्राधान्यमपरिहार्यम् प्रधान्येन कृतिव्याप्यत्वं फलस्यैव स्यात्, न नियोगस्येति भावः ।

अन्यदिच्छतोऽन्यक्रियाविरोधमभ्युपेत्योक्तम् । इदानीं विरोध एव नास्तीत्याह — **दृश्यते च नियोगसामर्थ्यादन्यदपीच्छतां अन्यक्रिया परतन्त्राणामिति**। स्वाम्यादिपरतन्त्राणां भृत्यादीनां अन्यदिच्छतामपि तन्नियोगवशात् अन्यक्रिया दृश्यते । यथा भोक्तुकामेषु भृत्येषु स्वामी नियुङ्क्ते —'भोक्तुकामा युध्यन्ताम्' इति । तदा भृत्या भोजनमकृत्वा युद्धे प्रवर्तन्ते । तस्मादन्यदिच्छत्यन्यत्करोतीति न विरुद्धमित्यर्थः ।

पुनः शङ्कते — **भाव्यस्यैव सतो विशेषणत्वमिति चेत् इति** ।

अयमाशयः — भाव्यस्यैव सतः स्वर्गादेः यन्नियोज्यविशेषणत्वम्, तत्स्वर्गादेः फलत्वमन्तरेण नोपपद्यत इति ।

---

1. इति वदतो (ग, घ, ङ, च, छ.)
2. सामर्थ्येनान्यत् (क, ख.)

[1] **न, नियोगविषयासंबन्धात्, ततः [2] क्रियान्तरभाव्यस्यपि विशेषणत्वात् । [3] इच्छामात्रप्रवृत्तिदर्शनाच्चायुक्तमेवैतत् ।**

**नन्वेवं [4] नैमित्तिकत्वे चाग्निहोत्रादीनां नित्यत्वव्याघातः । [5] अयमप्यपरो**

एतन्निराकरोति — **न, नियोगविषयासंबन्धादिति** ।

अयमाशयः — यदेतन्नियोज्यविशेषणस्य स्वर्गादेः भाव्यत्वमिच्छाविषयतया अवगतम् न तत् [6] नियोगविषययागादिसम्बन्धकारितम् अन्यसाध्यस्यापि साध्य-(विशेषण) त्वोपपत्तेः इति ।

अभ्युपेत्य भाव्यत्वसिद्धिं स्वर्गादेरुक्तम् । इदानी भाव्यत्वमेव स्वर्गादे (र्नास्ति) इच्छाविषयतामात्रे दुरु (प्रवृत्त्यु) पगमादित्याह — **इच्छामात्रप्रवृत्तिदर्शनाच्चायुक्तमेवैतदिति** । एतत्स्वर्गादेर्भाव्यत्वमयुक्तम् इच्छा [मात्रस्य] विषयसाध्यता(ज्ञान) शून्यस्यापि प्रवृत्तिदर्शनादिति ।

तत्र परः परिचोदयति — **नन्वेवं नैमित्तिकत्वे चाग्निहोहोत्रादीनां नित्यत्व-व्याघात इति** ।

अयमर्थः — यदि स्वर्गकामोऽग्निहोत्रं जुहुयात् इत्यत्र स्वर्गस्य भाव्यत्वं परिगृह्यते ततः काम्यमिदं अग्निहोत्रं स्यात्, 'यावज्जीवमग्निहोत्रं जुहुयात्' इति च

---

1. नियोगविषयसंबन्ध कुतः (ग.)
2 साध्यस्यापि (ग.)
3 मात्रे (ग.)
4 नैमित्तिकत्वादग्नि (क, ख, ग.)
5 मपरोऽस्य दोषो (क, ख.)
6. न नियोगविषयतया यागादि (क, ख, ग, घ, ङ, च.)

**दोषोऽस्तु, न तु नियोज्यविशेषपरात्फलप्रतिपत्तिः । [1] ननु स्वर्गकामस्य यागः [2] कर्तव्योऽवगम्यते । कथं च स तस्य कर्तव्यः यदि [3] तं न निष्पादयति ?**

नित्यम्, इति नित्यकाम्यविभागः सिद्ध्यति । यदा तु स्वर्गस्य भाव्यत्वं नेष्यते तदा स्वर्गकामनाया अपि जी(वन)वन्निमित्तत्वेनान्वयात् स्वर्गकामनाया सत्या अग्निहोत्रं जुहुयादिति नैमित्तिकत्वमेव भवेत् न काम्यत्वम् । भवतु को दोष इति चेत्— उच्यते— यावज्जीवमिति श्रुत्या अस्या उपसंहारो वाच्य. । अनुपसंहारे तथैव स्वर्गकामश्रुतिविषयस्यापि व्याप्य(प्त)त्वात्स्वर्गकामश्रुतेरानर्थक्य स्यात् । अतः तत्परिहाराय स्वर्गकामो जीवन्नग्निहोत्रं जुहुयादित्यर्थः स्यात् । तथा सति नित्यत्वं व्याहन्येत । सत्यपि जीवने स्वर्गकामनायामसत्यामनुष्ठान (न) स्यात् इति ।

सिद्धान्तवाद्याह— **अयमप्यपरोदोषोऽस्तु न तु नियोज्यविशेषपरात्फलप्रतिपत्तिरिति** । अस्य पक्षस्यायमप्यपरोदोषोऽस्तु—अग्निहोत्रस्य नित्यत्वव्याघातरूपः पूर्वोक्तश्च स्वर्गादीना भाव्यत्वासिद्धिरूप । न पुनरेतद्दोषपरिहारायैव नियोज्यविषयपरात् फलप्रतिपत्तिः सम्भवति । न प्रयोजनवशवर्ति शब्दसामर्थ्यमित्यभिप्राय ।

पुनश्चोदयति — **ननु स्वर्गकामस्य यागः कर्तव्योऽवगम्यते कथं च स तस्य कर्तव्यः यदि तं न निष्पादयतीति** । तस्य स्वर्गकामम्य कथं स यागः कर्तव्यो भवति, यदि यागतः (गःतस्य) स्वर्गं न सम्पादयति । यो हि यस्य किञ्चित्संपादयति स एव तस्य कर्तव्यो भवति, नान्य इत्यभिप्रायः ।

---

1 ननु च (ग.)

2. कर्तव्यो वा कथं (ख.)

3. न तं संपादयति (ख, ग.)

**न, गृहदाहवत इवेच्छावतः किञ्चिदसम्पादयतोऽपि कर्तव्यता स्यात् ।** [1] **यदि तर्ह्यसम्पादयति स्वर्गं यागे पुरुषः प्रवर्तते न तर्हि स्वर्गकामः । न,** [2] **निमेषादिष्वतथाभूतेष्वपि प्रवर्तमानस्य स्वर्गकामत्वाविघातात् । हेत्वन्तरात्तत्र प्रवृत्तिरिति चेत् — इहापि नियोगादिति न दोषः ।**

एतद्दूषयति—**न, गृहदाहवत इवेच्छावतः किञ्चिदसम्पादयतोऽपि कर्तव्यत्वा-(व्यता स्या) दिति** । गृह्यदाहवतः पुरुषस्य क्षामवतीये कर्मणि कर्तव्यत्वं किञ्चित्फल-मसंपादयत्यपि दृश्यते । तथेहापि स्यादित्यभिप्रायः ।

कामाधिकारे विशेषं मन्वानश्चोदयति — **यदि तर्हि असंपादयतः (ति) स्वर्गं यागे प्रवर्तते न तर्हि स्वर्गकाम इति** । यदि स्वर्गानुपाये यागे प्रवर्तते न तर्हि स्वर्गकामः । स्वर्गानुपाये प्रवृत्तिः स्वर्गकामत्वं च विरुध्यत इत्यभिप्रायः ।

उत्तरमाह—**न, निमेषादिष्वतथाभूतेष्वपि प्रवर्तमानस्य स्वर्गकामत्वाविघाता-दिति** । स्वर्गानुपायभूतेष्वपि निमेषादिषु प्रवर्तमानस्य स्वर्गकामत्वाविघातदर्शनादनै-कान्तिकमेतदित्यभिप्रायः ।

तत्र विशेषं शङ्कते — **हेत्वन्तरात्तत्र प्रवृत्तिरिति चेत् इति** । निमेषादौ प्रवृत्तिः हेत्वन्तरात्, न स्वर्गकामनया । अतः स्वर्गकामत्वस्य न व्याघातः इति ।

परिहरति — **इहापि नियोगात् इति न दोष इति** । इह यागादावपि न फलकामनातः प्रवृत्तिः काम्यमानसाधनभावस्याज्ञातत्वात्, कुतस्तर्हि? नियोगादेवे-त्यविशेषः ।

---

1. यदि ह्यसंपादयति प्रवर्तते न तर्हि (क, ख.)
2. निमित्तादिष्विवातथाभूतेष्वेव (क, ख.)

**स्यादेतत्—स्वर्गसिद्धाविच्छापगमे नियोगनिष्पत्तिः। अन्यथा कृतयागोऽपि नियोज्य एव स्यात्, [1]न कृतनियोगः। अतो नियोगार्थनिष्पत्तिसामर्थ्यात्स्वर्गादिसिद्धि[निष्पत्तिः][2]। न, विषयसिद्ध्या नियोगनिष्पत्तेः, स्वर्गादेश्च [3]नियोज्यविशेषणत्वेनाविषयत्वात्। अन्यथा [4]गृहदाहादेरप्यपगमप्रसङ्गः।**

पुनर्नियोगवादिनो मतं शङ्कते — **स्यादेतत् स्वर्गसिद्धाविच्छापगमे नियोगनिष्पत्तिः। अन्यथा कृतयागोऽपि नियोज्य एव स्यात्, न कृतनियोगः। अतो नियोगार्थनिष्पत्तिसामर्थ्यात्स्वर्गादिसिद्धिरिति।**

अयमभिप्रायः — नियोगस्य कर्तव्यता अवगम्यते यजेतेति राज्ञनियोगः कर्तव्यो गुरुनियोगः कर्तव्य इति। तस्य च नियोग(स्य) निष्पत्तिः स्वर्गनिष्पत्त्या भवति, अधिकारनिष्पत्तिपर्यन्तत्वात्तस्याः। अधिकारनिष्पत्तिश्च स्वर्गनिष्पत्त्या कामापगमे भवति नान्यथा। इतरथा [5]कृतयागोऽपि अकृतशास्त्रार्थः स्यात्। अधिकारनिमित्तस्य स्वर्गकामत्वस्य पूर्ववदवस्थानादिति तन्नियोगस्याकृतत्वात्। अतो नियोगार्थनिष्पत्तिसामर्थ्यात्स्वर्गादिनिष्पत्तिरिति।

निराकरोति — **न, विषयसिद्ध्या नियोगार्थनिष्पत्तेः स्वर्गादेश्च नियोज्यविशेषण[पर]त्वेनाविषयत्वात्, अन्यथा गृहदाहादेरप्यपगमप्रसङ्ग इति।** विषयनिष्पत्त्यैव नियोगो निष्पद्यते। न च नियोज्यविशेषणस्य स्वर्गस्य विषयभावः, यागस्यैव [6]तद्भावात्। न चाधिकारनिमित्तापगमापेक्षा नियोगनिष्पत्तिः। यदि तदपेक्षा गृहदाहस्यापगमोऽपेक्षितव्यः स्यात् का (क्षा) मवतीयनियोगनिष्पत्तेरिति।

1. न तु (ख.)
2. सिद्धिप्रतीतिः (क, ख, ग.)
3. विशेषणपरत्वेन (क, ख.)
4. दाहादेरपि प्रसङ्गः (क, ख.); दाहादेरप्यनुपरमप्रसङ्गः (ग.)
5. कृतयागोऽपि विकृतशास्त्रार्थः (छ.)
6. तत्स्वभावात् (छ.)

**तस्मात्फलपराः [1] स्वर्गकामादिश्रुतय इति मनोहरम् ।**

**इत्यार्यमण्डनस्य कृतिर्भावनाविवेकोऽवसितः ॥**

---

प्रतिपादितमर्थं निगमयति — **तस्मात्फलपराः स्वर्गकामादिश्रुतयः इति मनोहरमिति** । एवमुक्तेन न्यायेन स्वर्गादीना फलभावस्यानन्यलभ्यत्वात् सामर्थ्यलभ्यत्वाच्च नियोज्यविशेष[ण]स्य स्वर्गकामादिश्रुतयः फलपरा इत्येष एव पक्षः शोभन इति ।

श्रीमन्मण्डनमार्ताण्डसन्न्यायोक्तिगभस्तिभिः ।
उन्मीलितावगाढेयं भावनानलिनी मया ॥
भावनाया विवेकस्य विवृत्तिं **विष्णुनन्दनः** ।
लघ्वीं **नारायणश्चक्रे** नारायणपरायणः ॥

**इति भावनाविवेकविवृतिः नारायणकृता समाप्ता ॥**



---

1. कामश्रुतयः (क, ख.)